॥ श्रीरामजयम् ॥

# श्रीमद्वाल्मीकिरामायणम्

## बालकाण्डम्

धर्मालय संस्करणम् ।

***The Dharmalaya Edition.***

Edited by

The Late Rao Sahib P. S. KRISHNASWAMI

*Dharmalaya, Mylapore.*

Published with the aid of

Sri. M. N. RAMASWAMY IYER

*Banker, Palghat.*

By

**R. Subrahmanya Vadhyar & Sons,**

**BOOK-SELLERS & PUBLISHERS,**

**KALPATHI-PALGHAT**

Library Edition.] 1940 [Price Rs. 1—8—0

# PUBLISHERS' NOTE

We have great pleasure in presenting to the public this attractive new edition of the text of the Ramayana (Southern recension) according to the Manuscripts prepared by the late Rao Sahib P. S. Krishnaswami Iyer of Dharmalaya, Mylapore.

This edition will be noted to be an improvement over existing editions in several ways, the chief of them being:—

1. This is the only edition with the text divided and arranged according to the traditional recital of this great epic in 32 days by कुश and लव in श्रीरामाश्वमेध यज्ञवाट.

2. The text is based on 'चतुर्विंशत्सहस्राणि श्लोकानामुक्तवानृषिः', the edition of the Ramayana containing exactly 24000 slokas, and numbered from 1 to 24000.

3. Great care has been taken in comparing alternative readings and incorporating those which are most appropriate in the context and most consistent with the related passages in the great epic.

We therefore hope that this edition will receive due appreciation and an encouraging welcome from the discerning public.

॥ ॐ ॥

॥ अथ स्मार्तानां श्रीरामायणपठनोपक्रमेऽनुसन्धेयाः श्लोकाः ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ १ ॥

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ २ ॥

दोर्भिर्युक्ता चतुर्भिः स्फटिकमणिमयीमक्षमालां दधाना
हस्तेनैकेन पद्मं सितमपि च शुकं पुस्तकं चापरेण ।
भासा कुन्देन्दुशङ्खस्फटिकमणिनिभा भासमानाऽसमाना
सा मे वाग्देवतेयं निवसतु वदने सर्वदा सुप्रसन्ना ॥

कूजन्तं राम रामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ ४ ॥

वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन् रामकथानादं को न याति परां गतिम् ॥ ५ ॥

यः पिबन् सततं रामचरितामृतसागरम् ।
अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ ६ ॥

गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ ७ ॥

अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥ ८ ॥

उल्लङ्घ्य सिन्धोः सलिलं सलीलं
य: शोकवह्निं जनकात्मजायाः ।
आदाय तेनैव ददाह लङ्कां
नमामि तं प्राञ्जलिराञ्जनेयम् ॥ ९ ॥

आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥
यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥
मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥
यः कर्णाञ्जलिसंपुटैरहरहः सम्यक् पिबत्यादरात्
वाल्मीकेर्वदनारविन्दगलितं रामायणाख्यं मधु ।
जन्मव्याधिजराविपत्तिमरणैरत्यन्तसोपद्रवं
संसारं स विहाय गच्छति पुमान्विष्णोः पदं शाश्वतम् ॥
तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् ।
रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥
वाल्मीकिगिरिसंभूता रामसागरगामिनी ।
पुनातु भुवनं पुण्या रामायणमहानदी ॥ १५ ॥
श्लोकसारजलाकीर्णं सर्गकल्लोलसङ्कुलम् ।
काण्डग्राहमहामीनं वन्दे रामायणार्णवम् ॥ १६ ॥
वेदवेद्ये परे पुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ १७ ॥

वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥

वामे भूमिसुता पुरश्च हनुमान् पश्चात्सुमित्रासुतः
शत्रुघ्नो भरतश्च पार्श्वदलयोर्वाय्वादिकोणेषु च ।
सुग्रीवश्च विभीषणश्च युवराट् तारासुतो जाम्बवान्
मध्ये नीलसरोजकोमलरुचिं रामं भजे श्यामलम् ॥

नमोऽस्तु रामाय सलक्ष्मणाय देव्यै च तस्यै जनकात्मजायै ॥
नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यो नमोऽस्तु चन्द्रार्कमरुद्गणेभ्यः॥

॥ पारायणसमापनसमये अनुसन्धेयश्लोकक्रमः ॥

स्वस्ति प्रजाभ्यः परिपालयन्तां
न्याय्येन मार्गेण महीं महीशाः ।
गोब्राह्मणेभ्यः शुभमस्तु नित्यं
लोकाः समस्ताः सुखिनो भवन्तु ॥ १ ॥

काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी ।
देशोऽयं क्षोभरहितो ब्राह्मणास्सन्तु निर्भयाः ॥ २ ॥

अपुत्राः पुत्रिणः सन्तु पुत्रिणः सन्तु पौत्रिणः ।
अधनाः सधनाः सन्तु जीवन्तु शरदां शतम् ॥ ३ ॥

चरितं रघुनाथस्य शतकोटिप्रविस्तरम् ।
एकैकमक्षरं प्रोक्तं महापातकनाशनम् ॥ ४ ॥

शृण्वन् रामायणं भक्त्या यः पादं पदमेव वा ।
स याति ब्रह्मणः स्थानं ब्रह्मणा पूज्यते सदा ॥ ५ ॥

रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥ ६ ॥

यन्मङ्गलं सहस्राक्षे सर्वदेवनमस्कृते ।
वृत्रनाशे समभवत्तत्ते भवतु मङ्गलम् ॥ ७ ॥

यन्मङ्गलं सुपर्णस्य विनताऽकल्पयत्पुरा ।
अमृतं प्रार्थयानस्य तत्ते भवतु मङ्गलम् ॥ ८ ॥

अमृतोत्पादने दैत्यान् घ्नतो वज्रधरस्य यत् ।
अदितिर्मङ्गलं प्रादात्तत्ते भवतु मङ्गलम् ॥ ९ ॥

त्रीन्विक्रमान् प्रक्रमतो विष्णोरमिततेजसः ।
यदासीन्मङ्गलं राम तत्ते भवतु मङ्गलम् ॥ १० ॥

ऋतवः सागरा द्वीपा वेदा लोका दिशश्च ते ।
मङ्गलानि महाबाहो दिशन्तु तव सर्वदा ॥ ११ ॥

कायेन वाचा मनसेन्द्रियैर्वा
बुध्याऽऽत्मना वा प्रकृतेः स्वभावात् ।
करोमि यद्यत्सकलं परस्मै
नारायणायेति समर्पयामि ॥ १२ ॥

॥ श्रीवैष्णवानां श्रीरामायणपठनोपक्रमेनुसन्धेयाः श्लोकाः ॥

कूजन्तं राम रामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ १ ॥
वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन् रामकथानादं को न याति परां गतिम् ॥ २ ॥
यः पिबन् सततं रामचरितामृतसागरम् ।
अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ ३ ॥
गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ ४ ॥
अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥ ५ ॥
मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥

उल्लङ्घ्य सिन्धोः सलिलं सलीलं
यः शोकवह्निं जनकात्मजायाः ।
आदाय तेनैव ददाह लङ्कां
नमामि तं प्राञ्जलिराञ्जनेयम् ॥ ७ ॥

आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥
यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥

वेदवेद्ये परे पुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ १० ॥

तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् ।
रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥

श्रीराघवं दशरथात्मजमप्रमेयं
सीतापतिं रघुकुलान्वयरत्नदीपम् ।
आजानुबाहुमरविन्ददलायताक्षं
रामं निशाचरविनाशकरं नमामि ॥ १२ ॥

वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥

॥ पारायणसमापनक्रमः ॥

एवमेतत्पुरावृत्तमाख्यानं भद्रमस्तु वः ।
प्रव्याहरत विस्रब्धं बलं विष्णोः प्रवर्धताम् ॥ १ ॥

लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः ।
येषामिन्दीवरश्यामो हृदये सुप्रतिष्ठितः ॥ २ ॥

काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी ।
देशोऽयं क्षोभरहितो ब्राह्मणास्सन्तु निर्भयाः ॥ ३ ॥

कावेरी वर्धतां काले काले वर्षतु वासवः ।
श्रीरङ्गनाथो जयतु श्रीरङ्गश्रीश्च वर्धताम् ॥ ४ ॥

स्वस्ति प्रजाभ्यः परिपालयन्तां
न्याय्येन मार्गेण महीं महीशाः ।
गोब्राह्मणेभ्यः शुभमस्तु नित्यं
लोकाः समस्ताः सुखिनो भवन्तु ॥ ५ ॥

मङ्गलं कोसलेन्द्राय महनीयगुणाब्धये ।
चक्रवर्तितनूजाय सार्वभौमाय मङ्गलम् ॥ ६ ॥

वेदवेदान्तवेद्याय मेघश्यामलमूर्तये ।
पुंसां मोहनरूपाय पुण्यश्लोकाय मङ्गलम् ॥ ७ ॥

विश्वामित्रान्तरङ्गाय मिथिलानगरीपतेः ।
भाग्यानां परिपाकाय भव्यरूपाय मङ्गलम् ॥ ८ ॥

पितृभक्ताय सततं भ्रातृभिः सह सीतया ।
नन्दिताखिललोकाय रामभद्राय मङ्गलम् ॥ ९ ॥

त्यक्तसाकेतवासाय चित्रकूटविहारिणे ।
सेव्याय सर्वयमिनां धीरोदाराय मङ्गलम् ॥ १० ॥

सौमित्रिणा च जानक्या चापबाणासिधारिणे ।
संसेव्याय सदा भक्त्या स्वामिने मम मङ्गलम् ॥ ११ ॥

दण्डकारण्यवासाय खण्डितामरशत्रवे ।
गृध्रराजाय भक्ताय मुक्तिदायास्तु मङ्गलम् ॥ १२ ॥

सादरं शबरीदत्तफलमूलाभिलाषिणे ।
सौलभ्यपरिपूर्णाय सत्त्वोद्रिक्ताय मङ्गलम् ॥ १३ ॥

हनुमत्समवेताय हरीशाभीष्टदायिने ।
वालिप्रमथनायास्तु महाधीराय मङ्गलम् ॥ १४ ॥

श्रीमते रघुवीराय सेतूल्लङ्घितसिन्धवे ।
जितराक्षसराजाय रणधीराय मङ्गलम् ॥ १५ ॥

आसाद्य नगरीं दिव्यामभिषिक्ताय सीतया ।
राजाधिराजराजाय रामभद्राय मङ्गलम् ॥ १६ ॥

मङ्गलाशासनपरैर्मदाचार्यपुरोगमैः ।
सर्वैश्च पूर्वैराचार्यैः सत्कृतायास्तु मङ्गलम् ॥ १७ ॥

॥ अथ माध्वानां रामायणपठनोपक्रमेऽनुसन्धेयाः श्लोकाः ॥

शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ १ ॥

लक्ष्मीनारायणं वन्दे तद्भक्तप्रवरो हि यः ।
श्रीमदानन्दतीर्थाख्यो गुरुस्तं च नमाम्यहम् ॥ २ ॥

वेदे रामायणे चैव पुराणे भारते तथा ।
आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते ॥ ३ ॥

सर्वविघ्नप्रशमनं सर्वसिद्धिकरं परम् ।
सर्वजीवप्रणेतारं वन्दे विजयदं हरिम् ॥ ४ ॥

सर्वाभीष्टप्रदं रामं सर्वारिष्टनिवारकम् ।
जानकीजानिमनिशं वन्दे मद्गुरुवन्दितम् ॥ ५ ॥

अभ्रमं भङ्गरहितमजडं विमलं सदा ।
आनन्दतीर्थमतुलं भजे तापत्रयापहम् ॥ ६ ॥

भवति यदनुभावादेडमूकोऽपि वाग्मी
जडमतिरपि जन्तुर्जायते प्राज्ञमौलिः ।
सकलवचनचेतोदेवता भारती सा
मम वचसि विधत्तां सन्निधिं मानसे च ॥ ७ ॥

मिथ्यासिद्धान्तदुर्ध्वान्तविध्वंसनविचक्षणः ।
जयतीर्थाख्यतरणिर्भासतां नो हृदम्बरे ॥ ८ ॥

चित्रैः पदैश्च गम्भीरैर्वाक्यैर्मानैरखण्डितैः ।
गुरुभावं व्यञ्जयन्ती भाति श्रीजयतीर्थवाक् ॥ ९ ॥

कूजन्तं राम रामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ १० ॥

वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन् रामकथानादं को न याति परां गतिम् ॥ ११ ॥

यः पिबन् सततं रामचरितामृतसागरम् ।
अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ १२ ॥

गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ १३ ॥

अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥ १४ ॥

मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥

उल्लङ्घ्य सिन्धोः सलिलं सलीलं यः शोकवह्निं जनकात्मजायाः।
आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलिराञ्जनेयम् ॥

आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥

यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥

वेदवेद्ये परे पुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ १९ ॥

आपदामपहर्तारं दातारं सर्वसम्पदाम् ।
लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ॥ २० ॥

तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् ।
रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥

वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥

वन्दे वन्द्यं विधिभवमहेन्द्रादिबृन्दारकेन्द्रैः
व्यक्तं व्याप्तं स्वगुणगणतो देशतः कालतश्च ।
धूतावद्यं सुखचितिमयैर्मङ्गलैर्युक्तमङ्गैः
सानाथ्यं नो विदधदधिकं ब्रह्म नारायणाख्यम् ॥

भूषारत्नं भुवनवलयस्याखिलाश्चर्यरत्नं
लीलारत्नं जलधिदुहितुर्देवतामौलिरत्नम् ।
चिन्तारत्नं जगति भजतां सत्सरोजद्युरत्नं
कौसल्याया लसतु मम हृन्मण्डले पुत्ररत्नम् ॥ २४ ॥

महाव्याकरणाम्भोधिमन्थमानसमन्दरम् ।
कवयन्तं रामकीर्त्या हनुमन्तमुपास्महे ॥ २५ ॥

मुख्यप्राणाय भीमाय नमो यस्य भुजान्तरम् ।
नानावीरसुवर्णानां निकषाश्मायितं बभौ ॥ २६ ॥

स्वान्तस्थानन्तशय्याय पूर्णज्ञानमहार्णसे ।
उत्तुङ्गवाक्तरङ्गाय मध्वदुग्धाब्धये नमः ॥ २७ ॥

वाल्मीकेर्गौः पुनीयान्नो महीधरपदाश्रया ।
यद्दुग्धमुपजीवन्ति कवयस्तर्णका इव ॥ २८ ॥

सूक्तिरत्नाकरे रम्ये मूलरामायणार्णवे ।
विहरन्तो महीयांसः प्रीयन्तां गुरवो मम ॥ २९ ॥

हयग्रीव हयग्रीव हयग्रीवेति यो वदेत् ।
तस्य निःसरते वाणी जह्नुकन्याप्रवाहवत् ॥ ३० ॥

पारायणसमापनक्रमः ॥

स्वस्ति प्रजाभ्यः परिपालयन्तां
न्याय्येन मार्गेण महीं महीशाः ।
गोब्राह्मणेभ्यः शुभमस्तु नित्यं
लोकाः समस्ताः सुखिनो भवन्तु ॥ १ ॥

काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी ।
देशोऽयं क्षोभरहितो ब्राह्मणास्सन्तु निर्भयाः ॥ २ ॥

लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः ।
येषामिन्दीवरश्यामो हृदये सुप्रतिष्ठितः ॥ ३ ॥

मङ्गलं कोसलेन्द्राय महनीयगुणाब्धये ।
चक्रवर्तितनूजाय सार्वभौमाय मङ्गलम् ॥ ४ ॥

इत्यादिश्लोकाः श्रीवैष्णवपद्धतिवदनुसन्धेयाः ॥

ॐ

॥ श्रीगुरुभ्यो नमः ॥

श्री सीतालक्ष्मणभरतशत्रुघ्नहनुमत्समेत-

श्रीरामचन्द्रस्वामिने नमः

# ॥ श्रीमद्वाल्मीकिरामायणम् ॥

## बालकाण्डम्



[पुरा कुशलवाभ्यां श्रीरामसन्निधावश्वमेधयज्ञवाटे द्वात्रिंशति दिनेषु गीते श्रीमद्रामायणे प्रथमेऽह्नि बालकाण्डे प्रथमसर्गमारभ्य एकविंशसर्गपर्यन्तं (1—755 श्लोकाः) गीतम्। तस्मिन् दिने गीताः श्लोकाः 755]

### प्रथमः सर्गः ॥ १ ॥

कथासंक्षेपः ॥

तपःस्वाध्यायनिरतं तपस्वी वाग्विदां वरम् ।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम् ॥ १ ॥

को न्वस्मिन् सांप्रतं लोके गुणवान् कश्च वीर्यवान् ।
धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः ॥ २ ॥

चारित्रेण च को युक्तः सर्वभूतेषु को हितः।
विद्वान् कः कः समर्थश्च कश्चैकप्रियदर्शनः ॥ ३ ॥

आत्मवान् को जितक्रोधो द्युतिमान् कोऽनसूयकः।
कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे ॥ ४ ॥

एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे।
महर्षे त्वं समर्थोऽसि ज्ञातुमेवंविधं नरम् ॥ ५ ॥

श्रुत्वा चैतत् त्रिलोकज्ञो वाल्मीकेर्नारदो वचः।
श्रूयतामिति चामन्त्र्य प्रहृष्टो वाक्यमब्रवीत् ॥ ६ ॥

बहवो दुर्लभाश्चैव ये त्वया कीर्तिता गुणाः।
मुने वक्ष्याम्यहं बुद्ध्वा तैर्युक्तः श्रूयतां नरः ॥ ७ ॥

इक्ष्वाकुवंशप्रभवो रामो नाम जनैः श्रुतः।
नियतात्मा महावीर्यो द्युतिमान्धृतिमान् वशी ॥ ८ ॥

बुद्धिमान्नीतिमान् वाग्मी श्रीमान् शत्रुनिबर्हणः।
विपुलांसो महाबाहुः कम्बुग्रीवो महाहनुः ॥ ९ ॥

महोरस्को महेष्वासो गूढजत्रुररिन्दमः।
आजानुबाहुः सुशिराः सुललाटः सुविक्रमः ॥ १० ॥

समः समविभक्ताङ्गः स्निग्धवर्णः प्रतापवान्।
पीनवक्षा विशालाक्षो लक्ष्मीवान् शुभलक्षणः ॥ ११ ॥

धर्मज्ञः सत्यसन्धश्च प्रजानां च हिते रतः ।
यशस्वी ज्ञानसम्पन्नः शुचिर्वश्यः समाधिमान् ॥
प्रजापतिसमः श्रीमान्धाता रिपुनिषूदनः ॥ १२ ॥

रक्षिता जीवलोकस्य धर्मस्य परिरक्षिता ।
रक्षिता स्वस्य धर्मस्य स्वजनस्य च रक्षिता ॥ १३ ॥

वेदवेदाङ्गतत्त्वज्ञो धनुर्वेदे च निष्ठितः ।
सर्वशास्त्रार्थतत्त्वज्ञः स्मृतिमान् प्रतिभानवान् ॥ १४ ॥

सर्वलोकप्रियः साधुरदीनात्मा विचक्षणः ।
सर्वदाभिगतः सद्भिः समुद्र इव सिन्धुभिः ॥ १५ ॥

आर्यः सर्वसमश्चैव सदैकप्रियदर्शनः ।
स च सर्वगुणोपेतः कौसल्यानन्दवर्धनः ॥ १६ ॥

समुद्र इव गाम्भीर्ये धैर्येण हिमवानिव ।
विष्णुना सदृशो वीर्ये सोमवत् प्रियदर्शनः ॥ १७ ॥

कालाग्निसदृशः क्रोधे क्षमया पृथिवीसमः ।
धनदेन समस्त्यागे सत्ये धर्म इवापरः ॥ १८ ॥

तमेवं गुणसम्पन्नं रामं सत्यपराक्रमम् ।
ज्येष्ठं श्रेष्ठगुणैर्युक्तं प्रियं दशरथः सुतम् ॥ १९ ॥

प्रकृतीनां हितैर्युक्तं प्रकृतिप्रियकाम्यया ।
यौवराज्येन संयोक्तुमैच्छत् प्रीत्या महीपतिः ॥ २० ॥

तस्याभिषेकसंभारान्दृष्ट्वा भार्याऽथ कैकयी ।
पूर्वं दत्तवरा देवी वरमेनमयाचत ॥
विवासनं च रामस्य भरतस्याभिषेचनम् ॥ २१ ॥

स सत्यवचनाद्राजा धर्मपाशेन संयतः ।
विवासयामास सुतं रामं दशरथः प्रियम् ॥ २२ ॥

स जगाम वनं वीरः प्रतिज्ञामनुपालयन् ।
पितुर्वचननिर्देशात् कैकेय्याः प्रियकारणात् ॥ २३ ॥

तं व्रजन्तं प्रियो भ्राता लक्ष्मणोऽनुजगाम ह ।
स्नेहाद्विनयसंपन्नः सुमित्रानन्दवर्धनः ॥
भ्रातरं दयितो भ्रातुः सौभ्रात्रमनुदर्शयन् ॥ २४ ॥

रामस्य दयिता भार्या नित्यं प्राणसमा हिता ।
जनकस्य कुले जाता देवमायेव निर्मिता ॥ २५ ॥

सर्वलक्षणसंपन्ना नारीणामुत्तमा वधूः ।
सीताऽप्यनुगता रामं शशिनं रोहिणी यथा ॥ २६ ॥

पौरैरनुगतो दूरं पित्रा दशरथेन च ।
शृङ्गिबेरपुरे सूतं गङ्गाकूले व्यसर्जयत् ॥
गुहमासाद्य धर्मात्मा निषादाधिपतिं प्रियम् ॥ २७ ॥

गुहेन सहितो रामो लक्ष्मणेन च सीतया ॥ २८ ॥

ते वनेन वनं गत्वा नदीस्तीर्त्वा बहूदकाः ।
चित्रकूटमनुप्राप्य भरद्वाजस्य शासनात् ॥ २९ ॥

रम्यमावसथं कृत्वा रममाणा वने त्रयः ।
देवगन्धर्वसङ्काशास्तत्र ते न्यवसन् सुखम् ॥ ३० ॥

चित्रकूटं गते रामे पुत्रशोकातुरस्तथा ।
राजा दशरथः स्वर्गं जगाम विलपन् सुतम् ॥ ३१ ॥

मृते तु तस्मिन् भरतो वसिष्ठप्रमुखैर्द्विजैः ।
नियुज्यमानो राज्याय नैच्छद्राज्यं महाबलः ॥ ३२ ॥

स जगाम वनं वीरो रामपादप्रसादकः ॥ ३३ ॥
गत्वा तु सुमहात्मानं रामं सत्यपराक्रमम् ।
अयाचद्भ्रातरं राममार्यभावपुरस्कृतः ॥ ३४ ॥

त्वमेव राजा धर्मज्ञ इति रामं वचोऽब्रवीत् ।
रामोऽपि परमोदारः सुमुखः सुमहायशाः ॥
न चैच्छत् पितुरादेशाद्राज्यं रामो महाबलः ॥ ३५ ॥

पादुके चास्य राज्याय न्यासं दत्त्वा पुनः पुनः ।
निवर्तयामास ततो भरतं भरताग्रजः ॥ ३६ ॥

स काममनवाप्यैव रामपादावुपस्पृशन् ।
नन्दिग्रामेऽकरोद्राज्यं रामागमनकाङ्क्षया ॥ ३७ ॥

गते तु भरते श्रीमान् सत्यसन्धो जितेन्द्रियः ।
रामस्तु पुनरालक्ष्य नागरस्य जनस्य च ॥
तत्रागमनमेकाग्रो दण्डकान् प्रविवेश ह ॥ ३८ ॥

प्रविश्य तु महारण्यं रामो राजीवलोचनः ।
विराधं राक्षसं हत्वा शरभङ्गं ददर्श ह ॥
सुतीक्ष्णं चाप्यगस्त्यं च अगस्त्यभ्रातरं तथा ॥ ३९ ॥

अगस्त्यवचनाच्चैव जग्राहैन्द्रं शरासनम् ।
खड्गं च परमप्रीतस्तूणी चाक्षयसायकौ ॥ ४० ॥

वसतस्तस्य रामस्य वने वनचरैः सह ।
ऋषयोऽभ्यागमन् सर्वे वधायासुररक्षसाम् ॥ ४१ ॥

स तेषां प्रतिशुश्राव राक्षसानां तथा वने ॥ ४२ ॥

प्रतिज्ञातश्च रामेण वधः संयति रक्षसाम् ।
ऋषीणामग्निकल्पानां दण्डकारण्यवासिनाम् ॥ ४३ ॥

तेन तत्रैव वसता जनस्थाननिवासिनी ।
विरूपिता शूर्पणखा राक्षसी कामरूपिणी ॥ ४४ ॥

ततः शूर्पणखावाक्यादुद्युक्तान् सर्वराक्षसान् ।
खरं त्रिशिरसं चैव दूषणं चैव राक्षसम् ॥
निजघान रणे रामस्तेषां चैव पदानुगान् ॥ ४५ ॥

वने तस्मिन्निवसता जनस्थाननिवासिनाम् ।
रक्षसां निहतान्यासन् सहस्राणि चतुर्दश ॥ ४६ ॥

ततो ज्ञातिवधं श्रुत्वा रावणः क्रोधमूर्च्छितः ।
सहायं वरयामास मारीचं नाम राक्षसम् ॥ ४७ ॥

वार्यमाणः सुबहुशो मारीचेन स रावणः ।
न विरोधो बलवता क्षमो रावण तेन ते ॥ ४८ ॥

अनादृत्य तु तद्वाक्यं रावणः कालचोदितः ।
जगाम सहमारीचस्तस्याश्रमपदं तदा ॥ ४९ ॥

तेन मायाविना दूरमपवाह्य नृपात्मजौ ।
जहार भार्यां रामस्य गृध्रं हत्वा जटायुषम् ॥ ५० ॥

गृध्रं च निहतं दृष्ट्वा हृतां श्रुत्वा च मैथिलीम् ।
राघवः शोकसन्तप्तो विललापाकुलेन्द्रियः ॥ ५१ ॥

ततस्तेनैव शोकेन गृध्रं दग्ध्वा जटायुषम् ॥ ५२ ॥

मार्गमाणो वने सीतां राक्षसं सन्ददर्श ह ।
कबन्धं नाम रूपेण विकृतं घोरदर्शनम् ॥ ५३ ॥

तं निहत्य महाबाहुर्ददाह स्वर्गतश्च सः ॥ ५४ ॥

स चास्य कथयामास शबरीं धर्मचारिणीम् ।
श्रमणीं धर्मनिपुणामभिगच्छेति राघवम् ॥ ५५ ॥

सोऽभ्यगच्छन्महातेजाः शबरीं शत्रुसूदनः ।
शबर्या पूजितः सम्यग्रामो दशरथात्मजः ॥ ५६ ॥

पंपातीरे हनुमता सङ्गतो वानरेण ह ।
हनुमद्वचनाच्चैव सुग्रीवेण समागतः ॥ ५७ ॥

सुग्रीवाय च तत्सर्वं शंसद्रामो महाबलः ।
आदितस्तद्यथावृत्तं सीतायाश्च विशेषतः ॥ ५८ ॥

सुग्रीवश्चापि तत्सर्वं श्रुत्वा रामस्य वानरः ।
चकार सख्यं रामेण प्रीतश्चैवाग्निसाक्षिकम् ॥ ५९ ॥

ततो वानरराजेन वैरानुकथनं प्रति ।
रामायावेदितं सर्वं प्रणयाद्दुःखितेन च ॥ ६० ॥

प्रतिज्ञातं च रामेण तदा वालिवधं प्रति ।
वालिनश्च बलं तत्र कथयामास वानरः ॥ ६१ ॥

सुग्रीवः शङ्कितश्चासीन्नित्यं वीर्येण राघवे ॥ ६२ ॥

राघवप्रत्ययार्थं तु दुन्दुभेः कायमुत्तमम् ।
दर्शयामास सुग्रीवो महापर्वतसन्निभम् ॥ ६३ ॥

उत्स्मयित्वा महाबाहुः प्रेक्ष्य चास्थि महाबलः ।
पादाङ्गुष्ठेन चिक्षेप संपूर्णं दशयोजनम् ॥ ६४ ॥

बिभेद च पुनः सालान् सप्तैकेन महेषुणा ।
गिरिं रसातलं चैव जनयन् प्रत्ययं तदा ॥ ६५ ॥

ततः प्रीतमनास्तेन विश्वस्तः स महाकपिः ।
किष्किन्धां रामसहितो जगाम च गुहां तदा ॥ ६६ ॥

ततोऽगर्जद्धरिवरः सुग्रीवो हेमपिङ्गलः ।
तेन नादेन महता निर्जगाम हरीश्वरः ॥ ६७ ॥

अनुमान्य तदा तारां सुग्रीवेण समागतः ।
निजघान च तत्रैनं शरेणैकेन राघवः ॥ ६८ ॥

ततः सुग्रीववचनाद्धत्वा वालिनमाहवे ।
सुग्रीवमेव तद्राज्ये राघवः प्रत्यपादयत् ॥ ६९ ॥
स च सर्वान् समानीय वानरान् वानरर्षभः ।
दिशः प्रस्थापयामास दिदृक्षुर्जनकात्मजाम् ॥ ७० ॥
ततो गृध्रस्य वचनात् संपातेर्हनुमान् बली ।
शतयोजनविस्तीर्णं पुप्लुवे लवणार्णवम् ॥ ७१ ॥
तत्र लङ्कां समासाद्य पुरीं रावणपालिताम् ।
ददर्श सीतां ध्यायन्तीमशोकवनिकां गताम् ॥ ७२ ॥
निवेदयित्वाऽभिज्ञानं प्रवृत्तिं च निवेद्य च ।
समाश्वास्य च वैदेहीं मर्दयामास तोरणम् ॥ ७३ ॥
पञ्च सेनाग्रगान् हत्वा सप्त मन्त्रिसुतानपि ।
शूरमक्षं च निष्पिष्य ग्रहणं समुपागमत् ॥ ७४ ॥
अस्त्रेणोन्मुक्तमात्मानं ज्ञात्वा पैतामहाद्वरात् ।
मर्षयन् राक्षसान् वीरो यन्त्रिणस्तान् यदृच्छया ॥ ७५ ॥
ततो दग्ध्वा पुरीं लङ्कामृते सीतां च मैथिलीम् ।
रामाय प्रियमाख्यातुं पुनरायान्महाकपिः ॥ ७६ ॥
सोऽभिगम्य महात्मानं कृत्वा रामं प्रदक्षिणम् ।
न्यवेदयदमेयात्मा दृष्टा सीतेति तत्त्वतः ॥ ७७ ॥
ततः सुग्रीवसहितो गत्वा तीरं महोदधेः ।
समुद्रं क्षोभयामास शरैरादित्यसन्निभैः ॥ ७८ ॥
दर्शयामास चात्मानं समुद्रः सरितां पतिः ।
समुद्रवचनाच्चैव नलं सेतुमकारयत् ॥ ७९ ॥

तेन गत्वा पुरीं लङ्कां हत्वा रावणमाहवे ।
रामः सीतामनुप्राप्य परां व्रीडामुपागमत् ॥ ८० ॥
तामुवाच ततो रामः परुषं जनसंसदि ।
अमृष्यमाणा सा सीता विवेश ज्वलनं सती ॥ ८१ ॥
ततोऽग्निवचनात् सीतां ज्ञात्वा विगतकल्मषाम् ।
बभौ रामः संप्रहृष्टः पूजितः सर्वदैवतैः ॥ ८२ ॥
कर्मणा तेन महता त्रैलोक्यं सचराचरम् ।
सदेवर्षिगणं तुष्टं राघवस्य महात्मनः ॥ ८३ ॥
अभिषिच्य च लङ्कायां राक्षसेन्द्रं विभीषणम् ।
कृतकृत्यस्तदा रामो विज्वरः प्रमुमोद ह ॥ ८४ ॥
देवताभ्यो वरं प्राप्य समुत्थाप्य च वानरान् ।
अयोध्यां प्रस्थितो रामः पुष्पकेण सुहृद्वृतः ॥ ८५ ॥
भरद्वाजाश्रमं गत्वा रामः सत्यपराक्रमः ।
भरतस्यान्तिकं रामो हनूमन्तं व्यसर्जयत् ॥ ८६ ॥
पुनराख्यायिकां जल्पन् सुग्रीवसहितस्तदा ।
पुष्पकं तत् समारुह्य नन्दिग्रामं ययौ तदा ॥ ८७ ॥
नन्दिग्रामे जटां हित्वा भ्रातृभिः सहितोऽनघः ।
रामः सीतामनुप्राप्य राज्यं पुनरवाप्तवान् ॥ ८८ ॥
प्रहृष्टमुदितो लोकस्तुष्टः पुष्टः सुधार्मिकः ।
निरामयो ह्यरोगश्च दुर्भिक्षभयवर्जितः ॥ ८९ ॥
न पुत्रमरणं किञ्चिद्द्रक्ष्यन्ति पुरुषाः क्वचित् ।
नार्यश्चाविधवा नित्यं भविष्यन्ति पतिव्रताः ॥ ९० ॥

न चाग्निजं भयं किञ्चिन्नाप्सु मज्जन्ति जन्तवः ।
न वातजं भयं किञ्चिन्नापि ज्वरकृतं तथा ॥ ९१ ॥
न चापि क्षुद्भयं तत्र न तस्करभयं तथा ॥ ९२ ॥
नगराणि च राष्ट्राणि धनधान्ययुतानि च ।
नित्यं प्रमुदिताः सर्वे यथा कृतयुगे तथा ॥ ९३ ॥
अश्वमेधशतैरिष्ट्वा तथा बहुसुवर्णकैः ।
गवां कोट्ययुतं दत्त्वा ब्रह्मलोकं प्रयास्यति ॥ ९४ ॥
असङ्ख्येयं धनं दत्त्वा ब्राह्मणेभ्यो महायशाः ॥ ९५ ॥
राजवंशाञ्छतगुणान् स्थापयिष्यति राघवः ।
चातुर्वर्ण्यं च लोकेऽस्मिन् स्वे स्वे धर्मे नियोक्ष्यति ॥
दशवर्षसहस्राणि दशवर्षशतानि च ।
रामो राज्यमुपासित्वा ब्रह्मलोकं प्रयास्यति ॥ ९७ ॥
इदं पवित्रं पापघ्नं पुण्यं वेदैश्च संमितम् ।
यः पठेद्रामचरितं सर्वपापैः प्रमुच्यते ॥ ९८ ॥
एतदाख्यानमायुष्यं पठन् रामयणं नरः ।
सपुत्रपौत्रः सगणः प्रेत्य स्वर्गे महीयते ॥ ९९ ॥
पठन् द्विजो वागृषभत्वमीयात् स्यात् क्षत्रियो भूमिपतित्वमीयात् ।
वणिग्जनः पण्यफलत्वमीयाज्जनश्च शूद्रोऽपि महत्त्वमीयात् ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे प्रथमः सर्गः ॥

आदितः श्लोकाः 100

## द्वितीयः सर्गः ॥ २ ॥

### ब्रह्मागमनम् ॥

नारदस्य तु तद्वाक्यं श्रुत्वा वाक्यविशारदः ।
पूजयामास धर्मात्मा सहशिष्यो महामुनिः ॥ १ ॥

यथावत् पूजितस्तेन देवर्षिर्नारदस्तदा ।
आपृष्ट्वैवाभ्यनुज्ञातः स जगाम विहायसम् ॥ २ ॥

स मुहूर्तं गते तस्मिन् देवलोकं मुनिस्तदा ।
जगाम तमसातीरं जाह्नव्यास्त्वविदूरतः ॥ ३ ॥

स तु तीरं समासाद्य तमसाया मुनिस्तदा ।
शिष्यमाह स्थितं पार्श्वे दृष्ट्वा तीर्थमकर्दमम् ॥ ४ ॥

अकर्दममिदं तीर्थं भरद्वाज निशामय ।
रमणीयं प्रसन्नांबु सन्मनुष्यमनो यथा ॥ ५ ॥

न्यस्यतां कलशस्तात दीयतां वल्कलं मम ।
इदमेवावगाहिष्ये तमसातीर्थमुत्तमम् ॥ ६ ॥

एवमुक्तो भरद्वाजो वाल्मीकेन महात्मना ।
प्रायच्छत मुनेस्तस्य वल्कलं नियतो गुरोः ॥ ७ ॥

स शिष्यहस्तादादाय वल्कलं नियतेन्द्रियः ।
विचचार ह पश्यंस्तत् सर्वतो विपुलं वनम् ॥ ८ ॥

तस्याभ्याशे तु मिथुनं चरन्तमनपायिनम् ।
ददर्श भगवांस्तत्र क्रौञ्चयोश्चारुनिस्वनम् ॥ ९ ॥

तस्मात्तु मिथुनादेकं पुमांसं पापनिश्चयः ।
जघान वैरनिलयो निषादस्तस्य पश्यतः ॥ १० ॥

तं शोणितपरीताङ्गं वेष्टमानं महीतले ।
भार्या तु निहतं दृष्ट्वा रुराव करुणां गिरम् ॥ ११ ॥

वियुक्ता पतिना तेन द्विजेन सहचारिणा ।
ताम्रशीर्षेण मत्तेन पत्रिणा सहितेन वै ॥ १२ ॥

तथा तु तं द्विजं दृष्ट्वा निषादेन निपातितम् ।
ऋषेर्धर्मात्मनस्तस्य कारुण्यं समपद्यत ॥ १३ ॥

ततः करुणवेदित्वादधर्मोऽयमिति द्विजः ।
निशाम्य रुदतीं क्रौञ्चीमिदं वचनमब्रवीत् ॥ १४ ॥

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥ १५ ॥

तस्यैवं ब्रुवतश्चिन्ता बभूव हृदि वीक्षतः ।
शोकार्तेनास्य शकुनेः किमिदं व्याहृतं मया ॥ १६ ॥

चिन्तयन् स महाप्राज्ञश्चकार मतिमान् मतिम् ।
शिष्यं चैवाब्रवीद्वाक्यमिदं स मुनिपुङ्गवः ॥ १७ ॥

पादबद्धोऽक्षरसमस्तन्त्रीलयसमन्वितः ।
शोकार्तस्य प्रवृत्तो मे श्लोको भवतु नान्यथा ॥ १८ ॥

शिष्यस्तु तस्य ब्रुवतो मुनेर्वाक्यमनुत्तमम् ।
प्रतिजग्राह संहृष्टस्तस्य तुष्टोऽभवद्गुरुः ॥ १९ ॥

सोऽभिषेकं ततः कृत्वा तीर्थे तस्मिन् यथाविधि ।
तमेव चिन्तयन्नर्थमुपावर्तत वै मुनिः ॥ २० ॥

भरद्वाजस्ततः शिष्यो विनीतः श्रुतवान् मुनिः ।
कलशं पूर्णमादाय पृष्ठतोऽनुजगाम ह ॥ २१ ॥

स प्रविश्याश्रमपदं शिष्येण सह धर्मवित् ।
उपविष्टः कथाश्चान्याश्चकार ध्यानमास्थितः ॥ २२ ॥

आजगाम ततो ब्रह्मा लोककर्ता स्वयं प्रभुः ।
चतुर्मुखो महातेजा द्रष्टुं तं मुनिपुङ्गवम् ॥ २३ ॥

वाल्मीकिरथ तं दृष्ट्वा सहसोत्थाय वाग्यतः ।
प्राञ्जलिः प्रणतो भूत्वा तस्थौ परमविस्मितः ॥ २४ ॥

पूजयामास तं देवं पाद्यार्घ्यासनवन्दनैः ।
प्रणम्य विधिवच्चैनं पृष्ट्वाऽनामयमव्ययम् ॥ २५ ॥

अथोपविश्य भगवानासने परमार्चिते ।
वाल्मीकये महर्षये संदिदेशासनं ततः ॥ २६ ॥

ब्रह्मणा समनुज्ञातः सोऽप्युपाविशदासने ॥ २७ ॥

उपविष्टे तदा तस्मिन् साक्षाल्लोकपितामहे ।
तद्गतेनैव मनसा वाल्मीकिर्ध्यानमास्थितः ॥ २८ ॥

पापात्मना कृतं कष्टं वैरग्रहणबुद्धिना ।
यस्तादृशं चारुरवं क्रौञ्चं हन्यादकारणात् ॥ २९ ॥

शोचन्नेव मुहुः क्रौञ्चीमुपश्लोकमिमं पुनः ।
जगावन्तर्गतमना भूत्वा शोकपरायणः ॥ ३० ॥

तमुवाच ततो ब्रह्मा प्रहसन् मुनिपुङ्गवम् ।
श्लोक एव त्वया बद्धो नात्र कार्या विचारणा ॥ ३१ ॥

मच्छन्दादेव ते ब्रह्मन् प्रवृत्तेयं सरस्वती ।
रामस्य चरितं सर्वं कुरु त्वमृषिसत्तम ॥ ३२ ॥

धर्मात्मनो गुणवतो लोके रामस्य धीमतः ।
वृत्तं कथय धीरस्य यथा ते नारदाच्छ्रुतम् ॥ ३३ ॥

रहस्यं च प्रकाशं च यद्वृत्तं तस्य धीमतः ।
रामस्य सहसौमित्रे राक्षसानां च सर्वशः ॥ ३४ ॥

वैदेह्याश्चैव यद्वृत्तं प्रकाशं यदि वा रहः ।
तच्चाप्यविदितं सर्वं विदितं ते भविष्यति ॥ ३५ ॥

न ते वागनृता काव्ये काचिदत्र भविष्यति ।
कुरु रामकथां पुण्यां श्लोकबद्धां मनोरमाम् ॥ ३६ ॥

यावत् स्थास्यन्ति गिरयः सरितश्च महीतले ।
तावद्रामायणकथा लोकेषु प्रचरिष्यति ॥ ३७ ॥

यावद्रामस्य च कथा त्वत्कृता प्रचरिष्यति ।
तावदूर्ध्वमधश्च त्वं मल्लोकेषु निवत्स्यसि ॥ ३८ ॥

इत्युक्त्वा भगवान् ब्रह्मा तत्रैवान्तरधीयत ।
ततः सशिष्यो भगवान् मुनिर्विस्मयमाययौ ॥ ३९ ॥

तस्य शिष्यास्ततः सर्वे जगुः श्लोकमिमं पुनः ।
मुहुर्मुहुः प्रीयमाणाः प्राहुश्च भृशविस्मिताः ॥ ४० ॥

समाक्षरैश्चतुर्भिर्यः पादैर्गीतो महात्मना ।
सोऽनुव्याहरणाद्भूयः शोकः श्लोकत्वमागतः ॥ ४१ ॥

तस्य बुद्धिरियं जाता वाल्मीकेर्भावितात्मनः ।
कृत्स्नं रामायणं काव्यमीदृशैः करवाण्यहम् ॥ ४२ ॥

उदारवृत्तार्थपदैर्मनोरमै-
स्तदस्य रामस्य चकार कीर्तिमान् ।
समाक्षरैः श्लोकशतैर्यशस्विनो
यशस्करं काव्यमुदारधीर्मुनिः ॥ ४३ ॥

तदुपगतसमाससन्धियोगं
सममधुरोपनतार्थवाक्यबद्धम् ।
रघुवरचरितं मुनिप्रणीतं
दशशिरसश्च वधं निशामयध्वम् ॥ ४४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे द्वितीयः सर्गः ॥

आदितः श्लोकाः 144

## तृतीयः सर्गः ॥ ३ ॥

### रामचरित्रापरोक्षीकरणम् ॥

श्रुत्वा वस्तु समग्रं तद्धर्मात्मा धर्मसंहितम् ।
व्यक्तमन्वेषते भूयो यद्वृत्तं तस्य धीमतः ॥ १ ॥

उपस्पृश्योदकं सम्यङ्मुनिः स्थित्वा कृताञ्जलिः ।
प्राचीनाग्रेषु दर्भेषु धर्मेणान्वेषते गतिम् ॥ २ ॥

रामलक्ष्मणसीताभी राज्ञा दशरथेन च ।
सभार्येण सराष्ट्रेण यत्प्राप्तं तत्र तत्त्वतः ॥ ३ ॥

हसितं भाषितं चैव गतिर्या यच्च चेष्टितम् ।
तत्सर्वं धर्मवीर्येण यथावत् संप्रपश्यति ॥ ४ ॥

स्त्रीतृतीयेन च तदा यत्प्राप्तं चरता वने ।
सत्यसन्धेन रामेण तत्सर्वं चान्ववैक्षत ॥ ५ ॥

ततः पश्यति धर्मात्मा तत्सर्वं योगमास्थितः ।
पुरा यत्तत्र निर्वृत्तं पाणावामलकं यथा ॥ ६ ॥

तत्सर्वं तत्त्वतो दृष्ट्वा धर्मेण स महाद्युतिः ।
अभिरामस्य रामस्य चरितं कर्तुमुद्यतः ॥ ७ ॥

कामार्थगुणसंयुक्तं धर्मार्थगुणविस्तरम् ।
समुद्रमिव रत्नाढ्यं सर्वश्रुतिमनोहरम् ॥ ८ ॥

यथावत् कथितं पूर्वं नारदेन महर्षिणा ।
रघुवंशस्य चरितं चकार भगवानृषिः ॥ ९ ॥

जन्म रामस्य सुमहद्वीर्यं सर्वानुकूलताम् ।
लोकस्य प्रियतां क्षान्तिं सौम्यतां सत्यशीलताम् ॥ १० ॥

नानाविधाः कथाश्चान्या विश्वामित्रसमागमे ।
जानक्याश्च विवाहं च धनुषो भेदनं तथा ॥ ११ ॥

रामरामविवादं च गुणान् दाशरथेस्तथा ।
तथाभिषेकं रामस्य कैकेय्या दुष्टभावताम् ॥ १२ ॥

विघातं चाभिषेकस्य रामस्य च विवासनम् ।
राज्ञः शोकविलापं च परलोकस्य चाश्रयम् ॥ १३ ॥

प्रकृतीनां विषादं च प्रकृतीनां विसर्जनम् ।
निषादाधिपसंवादं सूतोपावर्तनं तथा ॥ १४ ॥

गङ्गायाश्चापि तरणं भरद्वाजस्य दर्शनम् ।
भरद्वाजाभ्यनुज्ञानाच्चित्रकूटस्य दर्शनम् ॥ १५ ॥

वास्तुकर्म निवेशं च भरतागमनं तथा ।
प्रसादनं च रामस्य पितुश्च सलिलक्रियाम् ॥ १६ ॥

पादुकाग्र्याभिषेकं च नन्दिग्रामनिवासनम् ।
दण्डकारण्यगमनं विराधस्य वधं तथा ॥ १७ ॥

दर्शनं शरभङ्गस्य सुतीक्ष्णेन समागमम् ।
अनसूयासमस्यां च अङ्गरागस्य चार्पणम् ॥ १८ ॥

अगस्त्यदर्शनं चैव दर्शनं च जटायुषः ॥ १९ ॥

शूर्पणख्याश्च संवादं विरूपकरणं तथा ।
वधं खरत्रिशिरसोरुत्थानं रावणस्य च ॥ २० ॥

मारीचस्य वधं चैव वैदेह्या हरणं तथा ।
राघवस्य विलापं च गृध्रराजनिबर्हणम् ॥ २१ ॥

कबन्धदर्शनं चैव पंपायाश्चापि दर्शनम् ।
शबर्या दर्शनं चैव हनूमदर्शनं तथा ॥ २२ ॥

विलापं चैव पंपायां राघवस्य महात्मनः ॥ २३ ॥

ऋश्यमूकस्य गमनं सुग्रीवेण समागमम् ।
प्रत्ययोत्पादनं सख्यं वालिसुग्रीवविग्रहम् ॥ २४ ॥

वालिप्रमथनं चैव सुग्रीवप्रतिपादनम् ।
ताराविलापं समयं वर्षरात्रनिवासनम् ॥ २५ ॥

कोपं राघवसिंहस्य बलानामुपसंग्रहम् ।
दिशः प्रस्थापनं चैव पृथिव्याश्च निवेदनम् ॥ २६ ॥

अङ्गुलीयकदानं च ऋक्षस्य बिलदर्शनम् ।
प्रायोपवेशनं चैव संपातेश्चापि दर्शनम् ॥ २७ ॥

पर्वतारोहणं चापि सागरस्य च लङ्घनम् ।
समुद्रवचनाच्चैव मैनाकस्य च दर्शनम् ॥ २८ ॥

राक्षसीतर्जनं चैव छायाग्राहस्य दर्शनम् ।
सिंहिकायाश्च निधनं लङ्कामलयदर्शनम् ॥
रात्रौ लङ्काप्रवेशं च एकस्यापि विचिन्तनम् ॥ २९ ॥

आपानभूमिगमनमवरोधस्य दर्शनम् ।
दर्शनं रावणस्यापि पुष्पकस्य च दर्शनम् ॥ ३० ॥

अशोकवनिकायानं सीतायाश्चापि दर्शनम् ।
अभिज्ञानप्रदानं च रावणस्य च दर्शनम् ॥ ३१ ॥

राक्षसीतर्जनं चैव त्रिजटास्वप्नदर्शनम् ।
अभिज्ञानप्रदानं च सीतायाश्चाभिभाषणम् ॥ ३२ ॥

मणिप्रदानं सीताया वृक्षभङ्गं तथैव च ।
राक्षसीविद्रवं चैव किङ्कराणां निबर्हणम् ॥ ३३ ॥

ग्रहणं वायुसूनोश्च लङ्कादाहाभिगर्जनम् ॥ ३४ ॥

प्रतिप्लवनमेवाथ मधूनां हरणं तथा ।
राघवाश्वासनं चैव बलनिर्यातनं तथा ॥ ३५ ॥

सङ्गमं च समुद्रेण नलसेतोश्च बन्धनम् ।
विभीषणेन संसर्गं वधोपायनिवेदनम् ॥
प्रतारं च समुद्रस्य रात्रौ लङ्कावरोधनम् ॥ ३६ ॥

कुम्भकर्णस्य निधनं मेघनादनिबर्हणम् ॥ ३७ ॥

रावणस्य विनाशं च सीतावाप्तिमरेः पुरे ।
विभीषणाभिषेकं च पुष्पकारोहणं तथा ॥ ३८ ॥

अयोध्यायाश्च गमनं भरतेन समागमम् ।
रामाभिषेकाभ्युदयं सर्वसैन्यविसर्जनम् ॥
स्वराष्ट्ररञ्जनं चैव वैदेह्याश्च विसर्जनम् ॥ ३९ ॥

अनागतं च यत्किञ्चिद्रामस्य वसुधातले ।
तच्चकारोत्तरे काव्ये वाल्मीकिर्भगवानृषिः ॥ ४० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे तृतीयः सर्गः ॥
आदितः श्लोकाः **174**

## चतुर्थः सर्गः ॥ ४ ॥

### श्रीरामसभायां कुशलवागमनम् ॥

प्राप्तराज्यस्य रामस्य वाल्मीकिर्भगवानृषिः ।
चकार चरितं कृत्स्नं विचित्रपदमात्मवान् ॥ १ ॥

चतुर्विंशत्सहस्राणि श्लोकानामुक्तवानृषिः ।
तथा सर्गशतान् पञ्च षट् काण्डानि तथोत्तरम् ॥ २ ॥

कृत्वाऽपि तन्महाप्राज्ञः सभविष्यं सहोत्तरम् ।
चिन्तयामास को न्वेतत् प्रयुञ्जीयादिति प्रभुः ॥ ३ ॥

तस्य चिन्तयमानस्य महर्षेर्भावितात्मनः ।
अगृह्णीतां ततः पादौ मुनिवेषौ कुशीलवौ ॥ ४ ॥

कुशीलवौ तु धर्मज्ञौ राजपुत्रौ यशस्विनौ ।
भ्रातरौ स्वरसंपन्नौ ददर्शाश्रमवासिनौ ॥ ५ ॥

स तु मेधाविनौ दृष्ट्वा वेदेषु परिनिष्ठितौ ।
वेदोपबृंहणार्थाय तावग्राहयत प्रभुः ॥ ६ ॥

काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत् ।
पौलस्त्यवधमित्येव चकार चरितव्रतः ॥ ७ ॥

पाठ्ये गेये च मधुरं प्रमाणैस्त्रिभिरन्वितम् ।
जातिभिः सप्तभिर्बद्धं तन्त्रीलयसमन्वितम् ॥ ८ ॥

हास्यशृङ्गारकरुणवीररौद्रभयानकैः ।
बीभत्सादिरसैर्युक्तं काव्यमेतदगायताम् ॥ ९ ॥

तौ तु गान्धर्वतत्त्वज्ञौ मूर्च्छनास्थानकोविदौ ।
भ्रातरौ स्वरसंपन्नौ गन्धर्वाविव रूपिणौ ॥ १० ॥

रूपलक्षणसंपन्नौ मधुरस्वरभाषिणौ ।
बिम्बादिवोद्धृतौ बिम्बौ रामदेहात्तथाऽपरौ ॥ ११ ॥

तौ राजपुत्रौ कार्त्स्न्येन धर्म्यमाख्यानमुत्तमम् ।
वाचो विधेयं तत्सर्वं कृत्वा काव्यमनिन्दितौ ॥ १२ ॥

ऋषीणां च द्विजातीनां साधूनां च समागमे ।
यथोपदेशं तत्त्वज्ञौ जगतुस्तौ कुशीलवौ ॥
महात्मानौ महाभागौ सर्वलक्षणलक्षितौ ॥ १३ ॥

तौ कदाचित्समेतानामृषीणां भावितात्मनाम् ।
आसीनानां समीपस्थाविदं काव्यमगायताम् ॥ १४ ॥

तच्छ्रुत्वा मुनयः सर्वे बाष्पपर्याकुलेक्षणाः ।
साधु साध्विति तावूचुः परं विस्मयमागताः ॥ १५ ॥

ते प्रीतमनसः सर्वे मुनयो धर्मवत्सलाः ।
प्रशशंसुः प्रशस्तव्यौ गायमानौ कुशीलवौ ॥ १६ ॥

अहो गीतस्य माधुर्यं श्लोकानां च विशेषतः ।
चिरनिर्वृत्तमप्येतत् प्रत्यक्षमिव दर्शितम् ॥ १७ ॥

प्रविश्य तावुभौ सुष्ठु तदा भावमगायताम् ।
सहितौ मधुरं रक्तं संपन्नं स्वरसम्पदा ॥ १८ ॥

एवं प्रशस्यमानौ तौ तपःश्लाघ्यैर्महात्मभिः ।
संरक्ततरमत्यर्थं मधुरं तावगायताम् ॥ १९ ॥

प्रीतः कश्चिन्मुनिस्ताभ्यां संस्थितः कलशं ददौ ।
प्रसन्नो वल्कले कश्चिददौ ताभ्यां महायशाः ॥ २० ॥

अन्यः कृष्णाजिनं प्रादाद्यज्ञसूत्रं तथाऽपरः ।
कश्चित् कमण्डलुं प्रादान्मौञ्जीमन्यो महामुनिः ॥ २१ ॥

बृसीं ददौ तदा चान्यः कुठारमपरो मुनिः ॥ २२ ॥

काषायमपरो वस्त्रं चीरमन्यो ददौ मुनिः ।
जटाबन्धनमन्यस्तु काष्ठरज्जुं मुदाऽन्वितः ॥ २३ ॥

यज्ञभाण्डमृषिः कश्चित्काष्ठभारं तथाऽपरः ।
औदुम्बरीं बृसीमन्ये स्वस्ति केचित्तदाऽवदन् ॥ २४ ॥

आयुष्यमपरे प्राहुर्मुदा तत्र महर्षयः ।
ददुश्चैव वरान् सर्वे मुनयः सामवादिनः ॥ २५ ॥

आश्चर्यमिदमाख्यानं मुनिना संप्रकीर्तितम् ।
परं कवीनामाधारं समाप्तं च यथाक्रमम् ॥ २६ ॥

अभिगीतमिदं गीतं सर्वगीतेषु कोविदौ ।
आयुष्यं पुष्टिजनकं सर्वश्रुतिमनोहरम् ॥ २७ ॥

प्रशस्यमानौ सर्वत्र कदाचित्तत्र गायकौ ।
रथ्यासु राजमार्गेषु ददर्श भरताग्रजः ॥ २८ ॥

स्ववेश्म चानीय ततो भ्रातरौ स कुशीलवौ ।
पूजयामास पूजार्हौ रामः शत्रुनिबर्हणः ॥ २९ ॥

आसीनः काञ्चने दिव्ये स च सिंहासने प्रभुः ।
उपोपविष्टः सचिवैर्भ्रातृभिश्च परंतपः ॥ ३० ॥

दृष्ट्वा तु रूपसंपन्नौ तावुभौ नियतस्तदा ।
उवाच लक्ष्मणं रामः शत्रुघ्नं भरतं तथा ॥ ३१ ॥

श्रूयतामिदमाख्यानमनयोर्देववर्चसोः ।
इत्युक्त्वा सदृशौ तौ तु गायकौ तावुवाच ह ॥
विचित्रार्थपदं सम्यग्गायन्तौ समचोदयत् ॥ ३२ ॥

तौ चापि मधुरं रक्तं स्वञ्चितायतनिःस्वनम् ।
तन्त्रीलयवदत्यर्थं विश्रुतार्थमगायताम् ॥ ३३ ॥

ह्लादयत्सर्वगात्राणि मनांसि हृदयानि च ।
श्रोत्राश्रयसुखं गेयं तद्बभौ जनसंसदि ॥ ३४ ॥

इमौ मुनी पार्थिवलक्षणान्वितौ कुशीलवौ चैव महातपस्विनौ।
ममापि तद्भूतिकरं प्रचक्ष्यते महानुभावं चरितं निबोधत ।।

ततस्तु तौ रामवचःप्रचोदितावगायतां मार्गविधानसंपदा ।
स चापि रामः परिषद्गतः शनैर्बुभूषया सक्तमना बभूव ह ।।

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे चतुर्थः सर्गः ।।

आदितः श्लोकाः 220

## पञ्चमः सर्गः ॥ ५ ॥

अयोध्यावर्णनम् ॥

सर्वापूर्वमियं येषामासीत् कृत्स्ना वसुन्धरा ।
प्रजापतिमुपादाय नृपाणां जयशालिनाम् ।। १ ।।

येषां स सगरो नाम सागरो येन खानितः ।
षष्टिः पुत्रसहस्राणि यं यान्तं पर्यवारयन् ।। २ ।।

इक्ष्वाकूणामिदं तेषां राज्ञां वंशे महात्मनाम् ।
महदुत्पन्नमाख्यानं रामायणमिति श्रुतम् ।। ३ ।।

तदिदं वर्तयिष्यामि सर्वं निखिलमादितः ।
धर्मकामार्थसहितं श्रोतव्यमनसूयया ।। ४ ।।

कोसलो नाम मुदितः स्फीतो जनपदो महान् ।
निविष्टः सरयूतीरे प्रभूतधनधान्यवान् ।। ५ ।।

अयोध्या नाम नगरी तत्रासील्लोकविश्रुता ।
मनुना मानवेन्द्रेण या पुरी निर्मिता स्वयम् ॥ ६ ॥

आयता दश च द्वे च योजनानि महापुरी ।
श्रीमती त्रीणि विस्तीर्णा सुविभक्तमहापथा ॥ ७ ॥

राजमार्गेण महता सुविभक्तेन शोभिता ।
मुक्तपुष्पावकीर्णेन जलसिक्तेन नित्यशः ॥ ८ ॥

तां तु राजा दशरथो महाराष्ट्रविवर्धनः ।
पुरीमावासयामास दिवं देवपतिर्यथा ॥ ९ ॥

कवाटतोरणवतीं सुविभक्तान्तरापणाम् ।
सर्वयन्त्रायुधवतीमुपेतां सर्वशिल्पिभिः ॥ १० ॥

सूतमागधसंबाधां श्रीमतीमतुलप्रभाम् ।
उच्चाट्टालध्वजवतीं शतघ्नीशतसंवृताम् ॥ ११ ॥

वधूनाटकसङ्घैश्च संयुक्तां सर्वतः पुरीम् ।
उद्यानाम्रवणोपेतां महतीं सालमेखलाम् ॥ १२ ॥

दुर्गगम्भीरपरिघां दुर्गामन्यैर्दुरासदाम् ।
वाजिवारणसंपूर्णां गोभिरुष्ट्रैः खरैस्तथा ॥ १३ ॥

सामन्तराजसङ्घैश्च बलिकर्मभिरावृताम् ।
नानादेशनिवासैश्च वणिग्भिरुपशोभिताम् ॥ १४ ॥

प्रासादै रत्नविकृतैः पर्वतैरिव शोभिताम् ।
कूटागारैश्च संपूर्णामिन्द्रस्येवामरावतीम् ॥ १५ ॥

चित्रामष्टापदाकारां वरनारीगणैर्युताम् ।
सर्वरत्नसमाकीर्णां विमानगृहशोभिताम् ॥ १६ ॥
गृहगाढामविच्छिद्रां समभूमौ निवेशिताम् ।
शालितण्डुलसंपूर्णामिक्षुकाण्डरसोदकाम् ॥ १७ ॥
दुन्दुभीभिर्मृदङ्गैश्च वीणाभिः पणवैस्तथा ।
नादितां भृशमत्यर्थं पृथिव्यां तामनुत्तमाम् ॥ १८ ॥
विमानमिव सिद्धानां तपसाऽधिगतं दिवि ।
न कुबेरस्य चेन्द्रस्य यमस्य वरुणस्य वा ॥ १९ ॥
ब्रह्मणोऽपि पुरी रम्या नेदृशी च स्वयंभुवः ।
सुनिवेशितवेश्मान्तां नरेन्द्रोत्तमसेविताम् ॥ २० ॥
ये च बाणैर्न विध्यन्ति विविक्तमपरापरम् ।
शब्दवेध्यं च विततं लघुहस्ता विशारदाः ॥ २१ ॥
सिंहव्याघ्रवराहाणां मत्तानां नदतां वने ।
हन्तारो निशितैः शस्त्रैर्बलाद्बाहुबलैरपि ॥ २२ ॥
तादृशानां सहस्रैस्तामभिपूर्णां महारथैः ।
पुरीमावासयामास राजा दशरथस्तदा ॥ २३ ॥
तामग्निमद्भिर्गुणवद्भिरावृतां द्विजोत्तमैर्वेदषडङ्गपारगैः ।
सहस्रदैः सत्यरतैर्महात्मभिर्महर्षिकल्पैर्ऋषिभिश्च केवलैः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे पञ्चमः सर्गः ॥

आदितः श्लोकाः 244.

अयोध्या नाम नगरी तत्रासील्लोकविश्रुता ।
मनुना मानवेन्द्रेण या पुरी निर्मिता स्वयम् ॥ ६ ॥

आयता दश च द्वे च योजनानि महापुरी ।
श्रीमती त्रीणि विस्तीर्णा सुविभक्तमहापथा ॥ ७ ॥

राजमार्गेण महता सुविभक्तेन शोभिता ।
मुक्तपुष्पावकीर्णेन जलसिक्तेन नित्यशः ॥ ८ ॥

तां तु राजा दशरथो महाराष्ट्रविवर्धनः ।
पुरीमावासयामास दिवं देवपतिर्यथा ॥ ९ ॥

कवाटतोरणवतीं सुविभक्तान्तरापणाम् ।
सर्वयन्त्रायुधवतीमुपेतां सर्वशिल्पिभिः ॥ १० ॥

सूतमागधसंबाधां श्रीमतीमतुलप्रभाम् ।
उच्चाट्टालध्वजवतीं शतघ्नीशतसंवृताम् ॥ ११ ॥

वधूनाटकसङ्घैश्च संयुक्तां सर्वतः पुरीम् ।
उद्यानाम्रवणोपेतां महतीं सालमेखलाम् ॥ १२ ॥

दुर्गगम्भीरपरिघां दुर्गामन्यैर्दुरासदाम् ।
वाजिवारणसंपूर्णां गोभिरुष्ट्रैः खरैस्तथा ॥ १३ ॥

सामन्तराजसङ्घैश्च बलिकर्मभिरावृताम् ।
नानादेशनिवासैश्च वणिग्भिरुपशोभिताम् ॥ १४ ॥

प्रासादै रत्नविकृतैः पर्वतैरिव शोभिताम् ।
कूटागारैश्च संपूर्णामिन्द्रस्येवामरावतीम् ॥ १५ ॥

चित्रामष्टापदाकारां वरनारीगणैर्युताम् ।
सर्वरत्नसमाकीर्णां विमानगृहशोभिताम् ॥ १६ ॥
गृहगाढामविच्छिद्रां समभूमौ निवेशिताम् ।
शालितण्डुलसंपूर्णामिक्षुकाण्डरसोदकाम् ॥ १७ ॥
दुन्दुभीभिर्मृदङ्गैश्च वीणाभिः पणवैस्तथा ।
नादितां भृशमत्यर्थं पृथिव्यां तामनुत्तमाम् ॥ १८ ॥
विमानमिव सिद्धानां तपसाऽधिगतं दिवि ।
न कुबेरस्य चेन्द्रस्य यमस्य वरुणस्य वा ॥ १९ ॥
ब्रह्मणोऽपि पुरी रम्या नेदृशी च स्वयंभुवः ।
सुनिवेशितवेश्मान्तां नरेन्द्रोत्तमसेविताम् ॥ २० ॥
ये च बाणैर्न विध्यन्ति विविक्तमपरापरम् ।
शब्दवेध्यं च विततं लघुहस्ता विशारदाः ॥ २१ ॥
सिंहव्याघ्रवराहाणां मत्तानां नदतां वने ।
हन्तारो निशितैः शस्त्रैर्बलाद्बाहुबलैरपि ॥ २२ ॥
तादृशानां सहस्रैस्तामभिपूर्णां महारथैः ।
पुरीमावासयामास राजा दशरथस्तदा ॥ २३ ॥
तामग्निमद्भिर्गुणवद्भिरावृतां द्विजोत्तमैर्वेदषडङ्गपारगैः ।
सहस्रदैः सत्यरतैर्महात्मभिर्महर्षिकल्पैर्ऋषिभिश्च केवलैः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे पञ्चमः सर्गः ॥

आदितः श्लोकाः 244.

षष्ठः सर्गः ॥ ६ ॥

दशरथस्य राज्यपरिपालनम् ॥

तस्यां पुर्यामयोध्यायां सर्ववित्सर्वसंग्रहः ।
दीर्घदर्शी महातेजाः पौरजानपदप्रियः ॥ १ ॥

इक्ष्वाकूणामतिरथो यज्वा धर्मरतो वशी ।
महर्षिकल्पो राजर्षिस्त्रिषु लोकेषु विश्रुतः ॥ २ ॥

बलवान्निहतामित्रो मित्रवान् विजितेन्द्रियः ।
धनैश्च सञ्चयैश्चान्यैः शक्रवैश्रवणोपमः ॥ ३ ॥

यथा मनुर्महातेजा लोकस्य परिरक्षिता ।
तथा दशरथो राजा वसञ्जगदपालयत् ॥ ४ ॥

तेन सत्याभिसन्धेन त्रिवर्गमनुतिष्ठता ।
पालिता सा पुरी श्रेष्ठा शक्रेणेवामरावती ॥ ५ ॥

तस्मिन् पुरवरे हृष्टा धर्मात्मानो बहुश्रुताः ।
नरास्तुष्टा धनैः स्वैः स्वैरलुब्धाः सत्यवादिनः ॥ ६ ॥

नाल्पसन्निचयः कश्चिदासीत्तस्मिन् पुरोत्तमे ।
कुटुम्बी यो ह्यसिद्धार्थोऽगवाश्वधनधान्यवान् ॥ ७ ॥

कामी वा न कदर्यो वा नृशंसः पुरुषः क्वचित् ।
द्रष्टुं शक्यमयोध्यायां नाविद्वान्न च नास्तिकः ॥ ८ ॥

सर्वे नराश्च नार्यश्च धर्मशीलाः सुसंयताः ।
उदिताः शीलवृत्ताभ्यां महर्षय इवामलाः ॥ ९ ॥

नाकुण्डली नामकुटी नास्रग्वी नाल्पभोगवान् ।
नामृष्टो नानुलिप्ताङ्गो नासुगन्धश्च विद्यते ॥ १० ॥

नामृष्टभोजी नादाता नाप्यनङ्गदनिष्कधृक् ।
नाहस्ताभरणो वाऽपि दृश्यते नाप्यनात्मवान् ॥ ११ ॥

नानाहिताग्निर्नायज्वा न क्षुद्रो वा न तस्करः ।
कश्चिदासीदयोध्यायां न च निर्वृत्तसङ्करः ॥ १२ ॥

स्वकर्मनिरता नित्यं ब्राह्मणा विजितेन्द्रियाः ।
दानाध्ययनशीलाश्च संयताश्च प्रतिग्रहे ॥ १३ ॥

न नास्तिको नानृतको न कश्चिदबहुश्रुतः ।
नासूयको न चाशक्तो नाविद्वान् विद्यते तदा ॥ १४ ॥

नाषडङ्गविदत्रासीन्नाव्रतो नासहस्रदः ।
न दीनः क्षिप्तचित्तो वा व्यथितो नाऽपि कश्चन ॥ १५ ॥

कश्चिन्नरो वा नारी वा नाश्रीमान्नाप्यरूपवान् ।
द्रष्टुं शक्यमयोध्यायां नापि राजन्यभक्तिमान् ॥ १६ ॥

वर्णेष्वग्र्यचतुर्थेषु देवतातिथिपूजकाः ।
कृतज्ञाश्च वदान्याश्च शूरा विक्रमसंयुताः ॥ १७ ॥

दीर्घायुषो नराः सर्वे धर्मं सत्यं च संश्रिताः ।
सहिताः पुत्रपौत्रैश्च नित्यं स्त्रीभिः पुरोत्तमे ॥ १८ ॥

क्षत्रं ब्रह्ममुखं चासीद्वैश्याः क्षत्रमनुव्रताः ।
शूद्राः स्वकर्मनिरतास्त्रीन् वर्णानुपचारिणः ॥ १९ ॥

सा तेनेक्ष्वाकुनाथेन पुरी सुपरिरक्षिता ।
यथा पुरस्तान्मनुना मानवेन्द्रेण धीमता ॥ २० ॥
योधानामग्निकल्पानां पेशलानां मनस्विनाम् ।
संपूर्णा कृतविद्यानां गुहा केसरिणामिव ॥ २१ ॥
काम्भोजविषये जातैर्बाह्लीकैश्च हयोत्तमैः ।
वनायुजैर्नदीजैश्च पूर्णा हरिहयोत्तमैः ॥ २२ ॥
विन्ध्यपर्वतजैर्मत्तैः पूर्णा हैमवतैरपि ।
मदान्वितैरतिबलैर्मातङ्गैः पर्वतोपमैः ॥ २३ ॥
ऐरावतकुलीनैश्च महापद्मकुलैस्तथा ।
अञ्जनादपि निष्पन्नैर्वामनादपि च द्विपैः ॥ २४ ॥
भद्रैर्मन्द्रैर्मृगैश्चैव भद्रमन्द्रमृगैस्तथा ।
भद्रमन्द्रैर्भद्रमृगैर्मृगमन्द्रैश्च सा पुरी ॥
नित्यमत्तैः सदा पूर्णा नागैरचलसन्निभैः ॥ २५ ॥
सा योजने च द्वे भूयः सत्यनामा प्रकाशते ।
यस्यां दशरथो राजा वसञ्जगदपालयत् ॥ २६ ॥
तां पुरीं स महातेजा राजा दशरथो महान् ।
शशास शमितामित्रो नक्षत्राणीव चन्द्रमाः ॥ २७ ॥
तां सत्यनामां दृढतोरणार्गलां गृहैर्विचित्रैरुपशोभितां शिवाम् ।
पुरीमयोध्यां नृसहस्रसंकुलां शशास वै शक्रसमो महीपतिः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे षष्ठः सर्गः ॥

आदितः श्लोकाः 272.

## सप्तमः सर्गः ॥ ७ ॥

### मन्त्रिवर्णनम् ॥

तस्यामात्या गुणैरासन्निक्ष्वाकोस्तु महात्मनः ।
मन्त्रज्ञाश्चेङ्गितज्ञाश्च नित्यं प्रियहिते रताः ॥ १ ॥

अष्टौ बभूवुर्वीरस्य तस्यामात्या यशस्विनः ।
शुचयश्चानुरक्ताश्च राजकृत्येषु नित्यशः ॥ २ ॥

धृष्टिर्जयन्तो विजयः सिद्धार्थो ह्यर्थसाधकः ।
अशोको मन्त्रपालश्च सुमन्त्रश्चाष्टमोऽभवत् ॥ ३ ॥

ऋत्विजौ द्वावभिमतौ तस्यास्तामृषिसत्तमौ ।
वसिष्ठो वामदेवश्च मन्त्रिणश्च तथाऽपरे ॥ ४ ॥

विद्याविनीता ह्रीमन्तः कुशला नियतेन्द्रियाः ।
श्रीमन्तश्च महात्मानः शास्त्रज्ञा दृढविक्रमाः ॥ ५ ॥

कीर्तिमन्तः प्रणिहिता यथावचनकारिणः ।
तेजःक्षमायशःप्राप्ताः स्मितपूर्वाभिभाषिणः ॥ ६ ॥

क्रोधात् कामार्थहेतोर्वा न ब्रूयुरनृतं वचः ॥ ७ ॥

तेषामविदितं किञ्चित् स्वेषु नास्ति परेषु वा ।
क्रियमाणं कृतं चापि चारेणापि चिकीर्षितम् ॥ ८ ॥

कुशला व्यवहारेषु सौहृदेषु परीक्षिताः ।
प्राप्तकाले यथादण्डं धारयेयुः सुतेष्वपि ॥ ९ ॥

कोशसंग्रहणे युक्ता बलस्य च परिग्रहे ।
अहितं चापि पुरुषं न विहिंस्युरदूषकम् ॥ १० ॥

वीराश्च नियतोत्साहा राजशास्त्रमनुष्ठिताः ।
शुचीनां रक्षितारश्च नित्यं विषयवासिनाम् ॥ ११ ॥

ब्रह्म क्षत्रमहिंसन्तस्ते कोशं समपूरयन् ।
सुतीक्ष्णदण्डाः संप्रेक्ष्य पुरुषस्य बलाबलम् ॥ १२ ॥

शुचीनामेकबुद्धीनां सर्वेषां समजानताम् ।
नासीत् पुरे वा राष्ट्रे वा मृषावादी नरः क्वचित् ॥

कश्चिन्न दुष्टस्तत्रासीत् परदाररतिर्नरः ।
प्रशान्तं सर्वमेवासीद्राष्ट्रं पुरवरं च तत् ॥ १४ ॥

सुवाससः सुवेषाश्च ते च सर्वे सुशीलिनः ।
हितार्थं च नरेन्द्रस्य जाग्रतो नयचक्षुषा ॥ १५ ॥

गुरौ गुणगृहीताश्च प्रख्याताश्च पराक्रमे ।
विदेशेष्वपि विज्ञाताः सर्वतो बुद्धिनिश्चयात् ।
अभिज्ञा गुणवन्तश्च न चासन् गुणगर्विताः ॥ १६ ॥

सन्धिविग्रहतत्त्वज्ञाः सर्वशास्त्रविशारदाः ।
मन्त्रसंवरणे युक्ताः शक्ताः सूक्ष्मासु बुद्धिषु ॥ १७ ॥

नीतिशास्त्रविशेषज्ञाः सततं प्रियवादिनः ।
ईदृशैस्तैरमात्यैश्च राजा दशरथोऽनघः ।
उपपन्नगुणोपेतैरन्वशासद्वसुन्धराम् ॥ १८ ॥

अवेक्षमाणश्चारेण प्रजा धर्मेण रञ्जयन् ।
प्रजानां पालनं कुर्वन्नधर्मं परिवर्जयन् ॥ १९ ॥

विश्रुतस्त्रिषु लोकेषु वदान्यः सत्यसङ्गरः ।
स तत्र पुरुषव्याघ्रः शशास पृथिवीमिमाम् ॥ २० ॥

नाध्यगच्छद्विशिष्टं वा तुल्यं वा शत्रुमात्मनः ।
मित्रवान्नतसामन्तः प्रतापहतकण्टकः ॥
स शशास जगद्राजा दिवं देवपतिर्यथा ॥ २१ ॥

तैर्मन्त्रिभिर्मन्त्रहिते निविष्टैर्वृतोऽनुरक्तैः कुशलैः समर्थैः ।
स पार्थिवो दीप्तिमवाप युक्तस्तेजोमयैर्गोभिरिवोदितोऽर्कः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे सप्तमः सर्गः ॥
आदितः श्लोकाः 295.

## अष्टमः सर्गः ॥ ८ ॥

### अश्वमेधयज्ञनिर्धारणम् ॥

तस्य त्वेवंप्रभावस्य धर्मज्ञस्य महात्मनः ।
सुतार्थं तप्यमानस्य नासीद्वंशकरः सुतः ॥ १ ॥

चिन्तयानस्य तस्येयं बुद्धिरासीन्महात्मनः ।
सुतार्थं वाजिमेधेन किमर्थं न यजाम्यहम् ॥ २ ॥

सुनिश्चितां मतिं कृत्वा यष्टव्यमिति बुद्धिमान् ।
मन्त्रिभिः सह धर्मात्मा सर्वैरेव कृतात्मभिः ॥ ३ ॥

ततोऽब्रवीदिदं राजा सुमन्त्रं मन्त्रिसत्तमम् ।
शीघ्रमानय मे सर्वान् गुरूंस्तान् सपुरोहितान् ॥ ४ ॥

सुयज्ञं वामदेवं च जाबालिमथ काश्यपम् ।
पुरोहितं वसिष्ठं च ये चान्ये द्विजसत्तमाः ॥ ५ ॥

ततः सुमन्त्रस्त्वरितं गत्वा त्वरितविक्रमः ।
समानयत् स तान् विप्रान् समस्तान् वेदपारगान् ॥

तान् पूजयित्वा धर्मात्मा राजा दशरथस्तदा ।
इदं धर्मार्थसहितं श्लक्ष्णं वचनमब्रवीत् ॥ ७ ॥

मम लालप्यमानस्य पुत्रार्थं नास्ति वै सुखम् ।
तदर्थं हयमेधेन यक्ष्यामीति मतिर्मम ॥ ८ ॥

तदहं यष्टुमिच्छामि शास्त्रदृष्टेन कर्मणा ।
कथं प्राप्स्याम्यहं कामं बुद्धिरत्र विचार्यताम् ॥ ९ ॥

साधु साध्विति तद्वाक्यं ब्राह्मणाः प्रत्यपूजयन् ।
वसिष्ठप्रमुखाः सर्वे पार्थिवस्य मुखेरितम् ।
ऊचुश्च परमप्रीताः सर्वे दशरथं वचः ॥ १० ॥

संभाराः संभ्रियन्तां ते तुरङ्गश्च विमुच्यताम् ।
सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम् ॥ ११ ॥

सर्वथा प्राप्स्यसे पुत्रानभिप्रेतांश्च पार्थिव ।
यस्य ते धार्मिकी बुद्धिरियं पुत्रार्थमागता ॥ १२ ॥

तत: प्रीतोऽभवद्राजा श्रुत्वैतद्द्विजभाषितम् ।
अमात्यांश्चाब्रवीद्राजा हर्षपर्याकुलेक्षण: ॥ १३ ॥

संभारा: संभ्रियन्तां मे गुरूणां वचनादिह ।
समर्थाधिष्ठितश्चाश्व: सोपाध्यायो विमुच्यताम् ॥ १४ ॥

सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम् ।
शान्तयश्चाभिवर्धन्तां यथाकल्पं यथाविधि ॥ १५ ॥

शक्य: प्राप्तुमयं यज्ञ: सर्वेणापि महीक्षिता ।
नापराधो भवेत् कष्टो यद्यस्मिन् क्रतुसत्तमे ॥ १६ ॥

छिद्रं हि मृगयन्तेऽत्र विद्वांसो ब्रह्मराक्षसा: ।
विघ्नितस्य च यज्ञस्य सद्य: कर्ता विनश्यति ॥ १७ ॥

तद्यथा विधिपूर्वं मे क्रतुरेष समाप्यते ।
तथा विधानं क्रियतां समर्था: करणेष्विह ॥ १८ ॥

तथेति चाब्रुवन्सर्वे मन्त्रिण: प्रत्यपूजयन् ।
पार्थिवेन्द्रस्य तद्वाक्यं यथाज्ञप्तं निशम्य ते ॥ १९ ॥

तथा द्विजास्ते धर्मज्ञा वर्धयन्तो नृपोत्तमम् ।
अनुज्ञातास्तत: सर्वे पुनर्जग्मुर्यथागतम् ॥ २० ॥

विसर्जयित्वा तान् विप्रान् सचिवानिदमब्रवीत् ।
ऋत्विग्भिरुपदिष्टोऽयं यथावत्क्रतुराप्यताम् ॥ २१ ॥

इत्युक्त्वा नृपशार्दूल: सचिवान् समुपस्थितान् ।
विसर्जयित्वा स्वं वेश्म प्रविवेश महाद्युति: ॥ २२ ॥

ततः स गत्वा ताः पत्नीर्नरेन्द्रो हृदयप्रियाः ।
उवाच दीक्षां विशत यक्ष्येऽहं सुतकारणात् ॥ २३ ॥

तासां तेनातिकान्तेन वचनेन सुवर्चसाम् ।
मुखपद्मान्यशोभन्त पद्मानीव हिमात्यये ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे अष्टमः सर्गः ॥

आदितः श्लोकाः 319

## नवमः सर्गः ॥ ९ ॥

सुमन्त्रेण सनत्कुमारोक्तकथनम् ॥

एतच्छ्रुत्वा रहः सूतो राजानमिदमब्रवीत् ।
श्रूयतां यत्पुरावृत्तं पुराणेन मया श्रुतम् ॥
ऋत्विग्भिरुपदिष्टोऽयं पुरावृत्तो मया श्रुतः ॥ १ ॥

सनत्कुमारो भगवान् पूर्वं कथितवान् कथाम् ।
ऋषीणां सन्निधौ राजन् तत्र पुत्रागमं प्रति ॥ २ ॥

काश्यपस्य तु पुत्रोऽस्ति विभण्डक इति श्रुतः ।
ऋश्यशृङ्ग इति ख्यातस्तस्य पुत्रो भविष्यति ॥ ३ ॥

स वने नित्यसंवृद्धो मुनिर्वनचरस्तदा ।
नान्यं जानाति विप्रेन्द्रो नित्यं पित्रनुवर्तनात् ॥ ४ ॥

द्वैविध्यं ब्रह्मचर्यस्य भविष्यति महात्मनः ।
लोकेषु प्रथितं राजन् विप्रैश्च कथितं सदा ॥ ५ ॥

तस्यैवं वर्तमानस्य कालः समभिवर्तत ।
अग्निं शुश्रूषमाणस्य पितरं च यशस्विनम् ॥ ६ ॥

एतस्मिन्नेव काले तु रोमपादः प्रतापवान् ।
अङ्गेषु प्रथितो राजा भविष्यति महाबलः ॥ ७ ॥

तस्य व्यतिक्रमाद्राज्ञो भविष्यति सुदारुणा ।
अनावृष्टिः सुघोरा वै सर्वभूतभयावहा ॥ ८ ॥

अनावृष्ट्यां तु वृत्तायां राजा दुःखसमन्वितः ।
ब्राह्मणान् श्रुतवृद्धांश्च समानीय प्रवक्ष्यति ॥ ९ ॥

भवन्तः श्रुतधर्माणो लोकचारित्रवेदिनः ।
समादिशन्तु नियमं प्रायश्चित्तं यथा भवेत् ॥ १० ॥

वक्ष्यन्ति ते महीपालं ब्राह्मणा वेदपारगाः ।
विभण्डकसुतं राजन् सर्वोपायैरिहानय ॥ ११ ॥

आनाय्य च महीपाल ऋश्यशृङ्गं सुसत्कृतम् ।
प्रयच्छ कन्यां शान्तां वै विधिना सुसमाहितः ॥ १२ ॥

तेषां तु वचनं श्रुत्वा राजा चिन्तां प्रपत्स्यते ।
केनोपायेन वै शक्यमिहानेतुं स वीर्यवान् ॥ १३ ॥

ततो राजा विनिश्चित्य सह मन्त्रिभिरात्मवान् ।
पुरोहितममात्यांश्च प्रेषयिष्यति सत्कृतान् ॥ १४ ॥

ते तु राज्ञो वचः श्रुत्वा व्यथिता विनताननाः ।
न गच्छेम ऋषेर्भीता अनुनेष्यन्ति तं नृपम् ॥ १५ ॥

वक्ष्यन्ति चिन्तयित्वा ते तस्योपायांश्च तत्क्षमान् ।
आनेष्यामो वयं विप्रं न च दोषो भविष्यति ॥ १६ ॥

एवमङ्गाधिपेनैव गणिकाभिर्ऋषेः सुतः ।
आनीतोऽवर्षयद्देवः शान्ता चास्मै प्रदीयते ॥ १७ ॥

ऋश्यशृङ्गस्तु जामाता पुत्रांस्तव विधास्यति ।
सनत्कुमारकथितं यथा ते व्याहृतं मया ॥ १८ ॥

अथ हृष्टो दशरथः सुमन्त्रं प्रत्यभाषत ।
यथर्श्यशृङ्गस्त्वानीतो विस्तरेण त्वयोच्यताम् ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे नवमः सर्गः ॥

आदितः श्लोकाः 338

## दशमः सर्गः ॥ १० ॥

ऋश्यशृङ्गानयनकथनम् ॥

सुमन्त्रश्चोदितो राज्ञा प्रोवाचेदं वचस्तथा ।
यथर्श्यशृङ्गस्त्वानीतः शृणु मे मन्त्रिभिः सह ॥ १ ॥

रोमपादमुवाचेदं सहामात्यं पुरोहितः ।
उपायो निरपायोऽयमस्माभिरभिचिन्तितः ॥ २ ॥

ऋश्यशृङ्गो वनचरस्तपस्स्वाध्यायने रतः ।
अनभिज्ञः स नारीणां विषयाणां सुखस्य च ॥ ३ ॥

इन्द्रियार्थैरभिमतैर्नरचित्तप्रमाथिभिः ।
पुरमानाययिष्यामः क्षिप्रं चाध्यवसीयताम् ॥ ४ ॥

गणिकास्तत्र गच्छन्तु रूपवत्यः स्वलंकृताः ।
प्रलोभ्य विविधोपायैरानेष्यन्तीह सत्कृताः ॥ ५ ॥

श्रुत्वा तथेति राजा च प्रत्युवाच पुरोहितम् ।
पुरोहितो मन्त्रिणश्च तथा चक्रुश्च ते तदा ॥
वारमुख्यास्तु तच्छ्रुत्वा वनं प्रविविशुर्महत् ॥ ६ ॥

आश्रमस्याविदूरेऽस्मिन् यत्नं कुर्वन्ति दर्शने ।
ऋषिपुत्रस्य धीरस्य नित्यमाश्रमवासिनः ॥ ७ ॥

पितुः स नित्यसन्तुष्टो नातिचक्राम चाश्रमात् ॥ ८ ॥

न तेन जन्मप्रभृति दृष्टपूर्वं तपस्विना ।
स्त्री वा पुमान् वा यच्चान्यत् सत्त्वं नगरराष्ट्रजम् ॥ ९ ॥

ततः कदाचित्तं देशमाजगाम यदृच्छया ।
विभण्डकसुतस्तत्र ताश्चापश्यद्वराङ्गनाः ॥ १० ॥

ताश्चित्रवेषाः प्रमदा गायन्त्यो मधुरस्वरैः ।
ऋषिपुत्रमुपागम्य सर्वा वचनमब्रुवन् ॥ ११ ॥

कस्त्वं किं वर्तसे ब्रह्मन् ज्ञातुमिच्छामहे वयम् ।
एकस्त्वं विजने घोरे वने चरसि शंस नः ॥ १२ ॥

अदृष्टरूपास्तास्तेन काम्यरूपा वने स्त्रियः ।
हार्दात्तस्य मतिर्जाता आख्यातुं पितरं स्वकम् ॥ १३ ॥

पिता विभण्डकोऽस्माकं तस्याहं सुत औरसः ।
ऋश्यशृङ्ग इति ख्यातं नाम कर्म च मे भुवि ॥ १४ ॥

इहाश्रमपदोऽस्माकं समीपे शुभदर्शनाः ।
करिष्ये वोऽत्र पूजां वै सर्वासां विधिपूर्वकम् ॥ १५ ॥

ऋषिपुत्रवचः श्रुत्वा सर्वासां मतिरास वै ।
तदाश्रमपदं द्रष्टुं जग्मुः सर्वाश्च तेन ताः ॥ १६ ॥

गतानां तु ततः पूजामृषिपुत्रश्चकार ह ।
इदमर्घ्यमिदं पाद्यमिदं मूलमिदं फलम् ॥ १७ ॥

प्रतिगृह्य च तां पूजां सर्वा एव समुत्सुकाः ।
ऋषेर्भीताश्च शीघ्रं ता गमनाय मतिं दधुः ॥ १८ ॥

अस्माकमपि मुख्यानि फलानीमानि वै द्विज ।
गृहाण प्रति भद्रं ते भक्षयस्व च मा चिरम् ॥ १९ ॥

ततस्तास्तं समालिङ्ग्य सर्वा हर्षसमन्विताः ।
मोदकान् प्रददुस्तस्मै भक्ष्यांश्च विविधान् शुभान् ॥ २० ॥

तानि चास्वाद्य तेजस्वी फलानीति स्म मन्यते ।
अनास्वादितपूर्वाणि वने नित्यनिवासिना ॥ २१ ॥

आपृच्छ्य च तदा विप्रं व्रतचर्यां निवेद्य च ।
गच्छन्ति स्मापदेशात्ता भीतास्तस्य पितुः स्त्रियः ॥ २२ ॥

गतासु तासु सर्वासु काश्यपस्यात्मजो द्विजः ।
अस्वस्थहृदयश्चासीद्दुःखात् संपरिवर्तते ॥ २३ ॥

ततोऽपरेद्युस्तं देशमाजगाम स वीर्यवान् ।
मनोज्ञा यत्र ता दृष्टा वारमुख्याः स्वलङ्कृताः ॥ २४ ॥

दृष्ट्वैव च तदा विप्रमायान्तं हृष्टमानसाः ।
उपसृत्य ततः सर्वास्तास्तमूचुरिदं वचः ॥ २५ ॥

एह्याश्रमपदं सौम्य अस्माकमिति चाब्रुवन् ।
विचित्राणि बहूनि स्युर्मूलानि च फलानि च ॥
तत्राप्येष विधिः श्रीमान् विशेषेण भविष्यति ॥ २६ ॥

श्रुत्वा तु वचनं तासां सर्वासां हृदयङ्गमम् ।
गमनाय मतिं चक्रे तं च निन्युस्तदा स्त्रियः ॥ २७ ॥

तत्र चानीयमाने तु विप्रे तस्मिन् महात्मनि ।
ववर्ष सहसा देवो जगत् प्रह्लादयंस्तदा ॥ २८ ॥

वर्षेणैवागतं विप्रं विषयं स नराधिपः ।
प्रत्युद्गम्य मुनिं प्रह्वः शिरसा च महीं गतः ॥ २९ ॥

अर्घ्यं च प्रददौ तस्मै न्यायतः सुसमाहितः ।
वव्रे प्रसादं विप्रेन्द्रान्मा विप्रं मन्युराविशेत् ॥ ३० ॥

अन्तःपुरं प्रविश्यास्मै कन्यां दत्त्वा यथाविधि ।
शान्तां शान्तेन मनसा राजा हर्षमवाप सः ॥ ३१ ॥

एवं स न्यवसत्तत्र सर्वकामैः सुपूजितः ।
ऋश्यशृङ्गो महातेजाः शान्तया सह भार्यया ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे दशमः सर्गः ॥
आदितः श्लोकाः 370

## एकादशः सर्गः ॥ ११ ॥

दशरथेन ऋश्यशृङ्गस्यानयनम् ॥

भूय एव च राजेन्द्र शृणु मे वचनं हितम् ।
यथा स देवप्रवरः कथायामेवमब्रवीत् ॥ १ ॥

इक्ष्वाकूणां कुले जातो भविष्यति सुधार्मिकः ।
नाम्ना दशरथो राजा श्रीमान् सत्यप्रतिश्रवः ॥ २ ॥

अङ्गराजेन सख्यं च तस्य राज्ञो भविष्यति ।
कन्या चास्य महाभागा शान्ता नाम भविष्यति ॥ ३ ॥

पुत्रस्त्वङ्गाधिराजस्य रोमपाद इति श्रुतः ।
तं स राजा दशरथो गमिष्यति महायशाः ॥ ४ ॥

अनपत्योऽस्मि धर्मात्मन् शान्ताभर्ता मम क्रतुम् ।
आरभेत त्वयाऽऽज्ञप्तः सन्तानार्थं कुलस्य च ॥ ५ ॥

श्रुत्वा राज्ञोऽथ तद्वाक्यं मनसा स विचिन्त्य च ।
प्रदास्यते पुत्रवन्तं शान्ताभर्तारमात्मवान् ॥ ६ ॥

प्रतिगृह्य च तं विप्रं स राजा विगतज्वरः ।
आहरिष्यति तं यज्ञं प्रहृष्टेनान्तरात्मना ॥ ७ ॥

तं च राजा दशरथो यशस्कामः कृताञ्जलिः ।
ऋश्यशृङ्गं द्विजश्रेष्ठं वरयिष्यति धर्मवित् ॥ ८ ॥

यज्ञार्थं प्रसवार्थं च स्वर्गार्थं च नरेश्वरः ।
लभते च स तं कामं द्विजमुख्याद्विशां पतिः ॥ ९ ॥

पुत्राश्चास्य भविष्यन्ति चत्वारोऽमितविक्रमाः । *
वंशप्रतिष्ठानकराः सर्वलोकेषु विश्रुताः ॥ १० ॥

एवं स देवप्रवरः पूर्वं कथितवान् कथाम् ।
सनत्कुमारो भगवान् पुरा देवयुगे प्रभुः ॥ ११ ॥

स त्वं पुरुषशार्दूल तमानय सुसत्कृतम् ।
स्वयमेव महाराज गत्वा सबलवाहनः ॥ १२ ॥

अनुमान्य वसिष्ठं च सूतवाक्यं निशम्य च ।
सान्तःपुरः सहामात्यः प्रययौ यत्र स द्विजः ॥ १३ ॥

वनानि सरितश्चैव व्यतिक्रम्य शनैः शनैः ।
अभिचक्राम तं देशं यत्र वै मुनिपुङ्गवः ॥ १४ ॥

आसाद्य तं द्विजश्रेष्ठं रोमपादसमीपगम् ।
ऋषिपुत्रं ददर्शादौ दीप्यमानमिवानलम् ॥ १५ ॥

ततो राजा यथान्यायं पूजां चक्रे विशेषतः ।
सखित्वात्तस्य वै राज्ञः प्रहृष्टेनान्तरात्मना ॥ १६ ॥

* 6

रोमपादेन चाख्यातमृषिपुत्राय धीमते ।
सख्यं संबन्धकं चैव तदा तं प्रत्यपूजयत् ॥ १७ ॥

एवं सुसत्कृतस्तेन सहोषित्वा नरर्षभः ।
सप्ताष्टदिवसान् राजा राजानमिदमब्रवीत् ॥ १८ ॥

शान्ता तव सुता राजन् सह भर्त्रा विशां पते ।
मदीयं नगरं यातु कार्यं हि महदुद्यतम् ॥ १९ ॥

तथेति राजा संश्रुत्य गमनं तस्य धीमतः ।
उवाच वचनं विप्रं गच्छ त्वं सह भार्यया ॥ २० ॥

ऋषिपुत्रः प्रतिश्रुत्य तथेत्याह नृपं तदा ।
स नृपेणाभ्यनुज्ञातः प्रययौ सह भार्यया ॥ २१ ॥

तावन्योन्याञ्जलिं कृत्वा स्नेहात् संश्लिष्य चोरसा ।
ननन्दतुर्दशरथो रोमपादश्च वीर्यवान् ॥ २२ ॥

ततः सुहृदमापृच्छ्य प्रस्थितो रघुनन्दनः ।
पौरेभ्यः प्रेषयामास दूतान् वै शीघ्रगामिनः ॥ २३ ॥

क्रियतां नगरं सर्वं क्षिप्रमेव स्वलंकृतम् ।
धूपितं सिक्तसंमृष्टं पताकाभिरलंकृतम् ॥ २४ ॥

ततः प्रहृष्टाः पौरास्ते श्रुत्वा राजानमागतम् ।
तथा प्रचक्रुस्तत्सर्वं राज्ञा यत् प्रेषितं तदा ॥ २५ ॥

ततः स्वलङ्कृतं राजा नगरं प्रविवेश ह ।
शङ्खदुन्दुभिनिर्घोषैः पुरस्कृत्य द्विजोत्तमम् ॥ २६ ॥

ततः प्रमुदिताः सर्वे दृष्ट्वा तं नागरा द्विजम् ।
प्रवेश्यमानं सत्कृत्य नरेन्द्रेणेन्द्रकर्मणा ॥ २७ ॥

अन्तःपुरं प्रवेश्यैनं पूजां कृत्वा च शास्त्रतः ।
कृतकृत्यं तदाऽऽत्मानं मेने तस्योपवाहनात् ॥ २८ ॥

अन्तःपुराणि सर्वाणि शान्तां दृष्ट्वा तथाऽऽगताम् ।
सह भर्त्रा विशालाक्षीं प्रीत्याऽऽनन्दमुपागमन् ॥ २९ ॥

पूज्यमाना च ताभिः सा राज्ञा चैव विशेषतः ।
उवास तत्र सुखिता कंचित् कालं सभर्तृका ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे एकादशः सर्गः ॥

आदितः श्लोकाः 400

## द्वादशः सर्गः ॥ १२ ॥

### संभारसंभरणम् ॥

ततः काले बहुतिथौ कस्मिंश्चित् सुमनोहरे ।
वसन्ते समनुप्राप्ते राज्ञो यष्टुं मनोऽभवत् ॥ १ ॥

ततः प्रणम्य शिरसा तं विप्रं देववर्णिनम् ।
यज्ञाय वरयामास सन्तानार्थं कुलस्य च ॥ २ ॥

तथेति च स राजानमुवाच च सुसत्कृतः ।
संभाराः संभ्रियन्तां ते तुरगश्च विमुच्यताम् ॥ ३ ॥

ततो राजाऽब्रवीद्वाक्यं सुमन्त्रं मन्त्रिसत्तमम् ।
सुमन्त्रावाहय क्षिप्रमृत्विजो ब्रह्मवादिनः ॥ ४ ॥

सुयज्ञं वामदेवं च जाबालिमथ काश्यपम् ।
पुरोहितं वसिष्ठं च ये चाप्यन्ये द्विजोत्तमाः ॥ ५ ॥

ततः सुमन्त्रस्त्वरितं गत्वा त्वरितविक्रमः ।
समानयत् स तान् विप्रान् समस्तान् वेदपारगान् ॥ ६ ॥

तान् पूजयित्वा धर्मात्मा राजा दशरथस्तदा ।
धर्मार्थसहितं युक्तं श्लक्ष्णं वचनमब्रवीत् ॥ ७ ॥

मम लालप्यमानस्य पुत्रार्थं नास्ति वै सुखम् ।
तदर्थं हयमेधेन यक्ष्यामीति मतिर्मम ॥ ८ ॥

तदहं यष्टुमिच्छामि शास्त्रदृष्टेन कर्मणा ।
ऋषिपुत्रप्रभावेन कामान् प्राप्स्यामि चाप्यहम् ॥ ९ ॥

ततः साध्विति तद्वाक्यं ब्राह्मणाः प्रत्यपूजयन् ।
वसिष्ठप्रमुखाः सर्वे पार्थिवस्य मुखेरितम् ॥ १० ॥

ऋश्यशृङ्गपुरोगाश्च प्रत्यूचुर्नृपतिं तदा ।
संभाराः संभ्रियन्तां ते तुरगश्च विमुच्यताम् ॥ ११ ॥

सर्वथा प्राप्स्यसे पुत्रांश्चतुरोऽमितविक्रमान् ।
यस्य ते धार्मिकी बुद्धिरियं पुत्रार्थमागता ॥ १२ ॥

ततः प्रीतोऽभवद्राजा श्रुत्वैतद्द्विजभाषितम् ।
अमात्यांश्चाब्रवीद्राजा हर्षेणेदं शुभाक्षरम् ॥ १३ ॥

गुरूणां वचनाच्छीघ्रं संभाराः संभ्रियन्तु मे ।
समर्थाधिष्ठितश्चाश्वः सोपाध्यायो विमुच्यताम् ॥ १४ ॥

सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम् ।
शान्तयश्च प्रवर्तन्तां यथाकल्पं यथाविधि ॥ १५ ॥

शक्यः कर्तुमयं यज्ञः सर्वेणापि महीक्षिता ।
नापराधो भवेत् कष्टो यद्यस्मिन् क्रतुसत्तमे ॥ १६ ॥

छिद्रं हि मृगयन्तेऽत्र विद्वांसो ब्रह्मराक्षसाः ।
विघ्नितस्य तु यज्ञस्य सद्यः कर्ता विनश्यति ॥ १७ ॥

तद्यथा विधिपूर्वं मे क्रतुरेष समाप्यते ।
तथा विधानं क्रियतां समर्थाः करणेष्विह ॥ १८ ॥

तथेति च ततः सर्वे मन्त्रिणः प्रत्यपूजयन् ।
पार्थिवेन्द्रस्य तद्वाक्यं यथाऽऽज्ञप्तमकुर्वत ॥ १९ ॥

ततो द्विजास्ते धर्मज्ञमस्तुवन् पार्थिवर्षभम् ।
अनुज्ञातास्ततः सर्वे पुनर्जग्मुर्यथागतम् ॥ २० ॥

गतेषु तेषु विप्रेषु मन्त्रिणस्तान्नराधिपः ।
विसर्जयित्वा स्वं वेश्म प्रविवेश महाद्युतिः ॥ २१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे द्वादशः सर्गः ॥

आदितः श्लोकाः 421

## त्रयोदशः सर्ग ॥ १३ ॥

### यज्ञशालाप्रवेशः ॥

पुनः प्राप्ते वसन्ते तु पूर्णः संवत्सरोऽभवत् ।
प्रसवार्थं ततो यष्टुं हयमेधेन वीर्यवान् ॥ १ ॥

अभिवाद्य वसिष्ठं च न्यायतः प्रतिपूज्य च ।
अब्रवीत् प्रश्रितं वाक्यं प्रसवार्थं द्विजोत्तमम् ॥
यज्ञो मे क्रियतामद्य यथोक्तं मुनिपुङ्गव ॥ २ ॥
यथा न विघ्नः क्रियते यज्ञाङ्गेषु विधीयताम् ॥ ३ ॥
भवान् स्निग्धः सुहृन्मह्यं गुरुश्च परमो महान् ।
वोढव्यो भवता चैव भारो यज्ञस्य चोद्यतः ॥ ४ ॥
तथेति च स राजानमब्रवीद्द्विजसत्तमः ।
करिष्ये सर्वमेवैतद्भवता यत् समर्थितम् ॥ ५ ॥
ततोऽब्रवीद्द्विजान् वृद्धान् यज्ञकर्मसु निष्ठितान् ।
स्थापत्ये निष्ठितांश्चैव वृद्धान्परमधार्मिकान् ॥ ६ ॥
कर्मान्तिकाञ्छिल्पकरान् वर्धकीन् खनकानपि ।
गणकाञ्छिल्पिनश्चैव तथैव नटनर्तकान्
ततोऽब्रवीच्छास्त्रविदः पुरुषान् सुबहुश्रुतान् ॥ ७ ॥
यज्ञकर्म समीहन्तां भवन्तो राजशासनात् ।
इष्टका बहुसाहस्री शीघ्रमानीयतामिति ॥ ८ ॥
औपकार्याः क्रियन्तां च राज्ञां बहुगुणान्विताः ।
ब्राह्मणावसथाश्चैव कर्तव्याः शतशः शुभाः ॥ ९ ॥

भक्ष्यान्नपानैर्बहुभिः समुपेताः सुनिष्ठिताः ।
तथा पौरजनस्यापि कर्तव्या बहुविस्तराः ॥ १० ॥

आवासा बहुभक्षाश्च सर्वकामैरुपस्थिताः ।
तथा जानपदस्यापि जनस्य बहु शोभनम् ॥ ११ ॥

दातव्यमन्नं विधिवत् सत्कृत्य न तु लीलया ॥ १२ ॥

सर्ववर्णा यथा पूजां प्राप्नुवन्ति सुसत्कृताः ।
न चावज्ञा प्रयोक्तव्या कामक्रोधवशादपि ॥ १३ ॥

यज्ञकर्मसु ये व्यग्राः पुरुषाः शिल्पिनस्तथा ।
तेषामपि विशेषेण पूजा कार्या यथाक्रमम् ॥
ते च स्युः संभृताः सर्वे वसुभिर्भोजनेन च ॥ १४ ॥

यथा सर्वं सुविहितं न किञ्चित् परिहीयते ।
तथा भवन्तः कुर्वन्तु प्रीतिस्निग्धेन चेतसा ॥ १५ ॥

ततः सर्वे समागम्य वसिष्ठमिदमब्रुवन् ।
यथोक्तं तत्सुविहितं न किञ्चित् परिहीयते ॥
यथोक्तं तत् करिष्यामो न किञ्चित् परिहास्यते ॥ १६ ॥

ततः सुमन्त्रमानीय वसिष्ठो वाक्यमब्रवीत् ।
निमन्त्रयस्व नृपतीन् पृथिव्यां ये च धार्मिकाः ॥ १७ ॥

ब्राह्मणान् क्षत्रियान् वैश्यान् शूद्रांश्चैव सहस्रशः ।
समानयस्व सत्कृत्य सर्वदेशेषु मानवान् ॥ १८ ॥

मिथिलाधिपतिं वीरं जनकं सत्यविक्रमम् ।
निष्ठितं सर्वशास्त्रेषु तथा वेदेषु निष्ठितम् ॥ १९ ॥

तमानय महाभागं स्वयमेव सुसत्कृतम् ।
पूर्वसंबन्धिनं ज्ञात्वा ततः पूर्वं ब्रवीमि ते ॥ २० ॥

तथा काशीपतिं स्निग्धं सततं प्रियवादिनम् ।
सद्वृत्तं देवसङ्काशं स्वयमेवानयस्व ह ॥ २१ ॥

तथा केकयराजानं वृद्धं परमधार्मिकम् ।
श्वशुरं राजसिंहस्य सपुत्रं त्वमिहानय ॥ २२ ॥

अङ्गेश्वरं महाभागं रोमपादं सुसत्कृतम् ।
वयस्यं राजसिंहस्य तमानय यशस्विनम् ॥ २३ ॥

प्राचीनान् सिन्धुसौवीरान् सौराष्ट्रेयांश्च पार्थिवान् ।
दाक्षिणात्यान्नरेन्द्रांश्च समस्तानानयस्व ह ॥ २४ ॥

सन्ति स्निग्धाश्च ये चान्ये राजानः पृथिवीतले ।
तानानय यथाक्षिप्रं सानुगान् सहबान्धवान् ॥ २५ ॥

वसिष्ठवाक्यं तच्छ्रुत्वा सुमन्त्रस्त्वरितस्तदा ।
व्यादिशत् पुरुषांस्तत्र राज्ञामानयने शुभान् ॥ २६ ॥

स्वयमेव हि धर्मात्मा प्रययौ मुनिशासनात् ।
सुमन्त्रस्त्वरितो गत्वा समानेतुं महीक्षितः ॥ २७ ॥

ते च कर्मान्तिकाः सर्वे वसिष्ठाय च धीमते ।
सर्वं निवेदयन्ति स्म यज्ञे यदुपकल्पितम् ॥ २८ ॥

ततः प्रीतो द्विजश्रेष्ठस्तान् सर्वानिदमब्रवीत् ॥ २९ ॥

अवज्ञया न दातव्यं कस्यचिल्लीलयापि वा ।
अवज्ञया कृतं हन्याद्दातारं नात्र संशयः ॥ ३० ॥

ततः कैश्चिदहोरात्रैरुपयाता महीक्षितः ।
बहूनि रत्नान्यादाय राज्ञो दशरथस्य च ॥ ३१ ॥

ततो वसिष्ठः सुप्रीतो राजानमिदमब्रवीत् ।
उपयाता नरव्याघ्र राजानस्तव शासनात् ॥ ३२ ॥

मया च सत्कृताः सर्वे यथार्हं राजसत्तमाः ।
यज्ञियं च कृतं राजन् पुरुषैः सुसमाहितैः ॥ ३३ ॥

निर्यातु च भवान् यष्टुं यज्ञायतनमन्तिकात् ।
सर्वकामैरुपहृतैरुपेतं वै समन्ततः ॥ ३४ ॥
द्रष्टुमर्हसि राजेन्द्र मनसेव विनिर्मितम् ॥ ३५ ॥

तथा वसिष्ठवचनादृश्यशृङ्गस्य चोभयोः ।
शुभे दिवसनक्षत्रे निर्यातो जगतीपतिः ॥ ३६ ॥

ततो वसिष्ठप्रमुखाः सर्व एव द्विजोत्तमाः ।
ऋश्यशृङ्गं पुरस्कृत्य यज्ञकर्मारभंस्तदा ॥
यज्ञवाटगताः सर्वे यथाशास्त्रं यथाविधि ॥ ३७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे त्रयोदशः सर्गः ॥

आदितः श्लोकाः 458

## चतुर्दशः सर्गः ॥ १४ ॥

### अश्वमेधयजनम् ॥

अथ संवत्सरे पूर्णे तस्मिन् प्राप्ते तुरङ्गमे ।
सरय्वाश्चोत्तरे तीरे राज्ञो यज्ञोऽभ्यवर्तत ॥ १ ॥

ऋश्यशृङ्गं पुरस्कृत्य कर्म चक्रुर्द्विजर्षभाः ।
अश्वमेधे महायज्ञे राज्ञोऽस्य सुमहात्मनः ॥ २ ॥

कर्म कुर्वन्ति विधिवद्याजका वेदपारगाः ।
यथाविधि यथान्यायं परिक्रामन्ति शास्त्रतः ॥ ३ ॥

प्रवर्ग्यं शास्त्रतः कृत्वा तथैवोपसदं द्विजाः ।
चक्रुश्च विधिवत् सर्वमधिकं कर्म शास्त्रतः ॥ ४ ॥

अभिपूज्य ततो हृष्टाः सर्वे चक्रुर्यथाविधि ।
प्रातःसवनपूर्वाणि कर्माणि मुनिपुङ्गवाः ॥ ५ ॥

ऐन्द्रश्च विधिवद्दत्तो राजा चाभिष्टुतोऽनघः ।
माध्यन्दिनं च सवनं प्रावर्तत यथाक्रमम् ॥ ६ ॥

तृतीयसवनं चैव राज्ञोऽस्य सुमहात्मनः ।
चक्रुस्ते शास्त्रतो दृष्ट्वा यथा ब्राह्मणपुङ्गवाः ॥ ७ ॥

न चाहुतमभूत्तत्र स्खलितं वाऽपि किञ्चन ।
दृश्यते ब्रह्मवत् सर्वं क्षेमयुक्तं हि चक्रिरे ॥ ८ ॥

न तेष्वहस्सु श्रान्तो वा क्षुधितो वाऽपि दृश्यते ।
नाविद्वान् ब्राह्मणस्तत्र नाशतानुचरस्तथा ॥ ९ ॥

ब्राह्मणा भुञ्जते नित्यं नाथवन्तश्च भुञ्जते ।
तापसा भुञ्जते वाऽपि श्रमणा भुञ्जते तथा ॥ १० ॥

वृद्धाश्च व्याधिताश्चैव स्त्रियो बालास्तथैव च ।
अनिशं भुञ्जमानानां न तृप्तिरुपलभ्यते ॥ ११ ॥

दीयतां दीयतामन्नं वासांसि विविधानि च ।
इति संचोदितास्तत्र तथा चक्रुरनेकशः ॥ १२ ॥

अन्नकूटाश्च बहवो दृश्यन्ते पर्वतोपमाः ।
दिवसे दिवसे तत्र सिद्धस्य विधिवत्तदा ॥ १३ ॥

नानादेशादनुप्राप्ताः पुरुषाः स्त्रीगणास्तथा ।
अन्नपानैः सुविहितास्तस्मिन् यज्ञे महात्मनः ॥ १४ ॥

अन्नं हि विधिवत् स्वादु प्रशंसन्ति द्विजर्षभाः ।
अहो तृप्ताः स्म भद्रं त इति शुश्राव राघवः ॥ १५ ॥

स्वलंकृताश्च पुरुषा ब्राह्मणान् पर्यवेषयन् ।
उपासते च तानन्ये सुमृष्टमणिकुण्डलाः ॥ १६ ॥

कर्मान्तरे तदा विप्रा हेतुवादान् बहूनपि ।
प्राहुः सुवाग्मिनो धीराः परस्परजिगीषया ॥ १७ ॥

दिवसे दिवसे तत्र संस्तरे कुशला द्विजाः ।
सर्वकर्माणि चक्रुस्ते यथाशास्त्रं प्रचोदिताः ॥ १८ ॥

नाषडङ्गविदत्रासीन्नाव्रतो नाबहुश्रुतः ।
सदस्यास्तस्य वै राज्ञो नावादकुशला द्विजाः ॥ १९ ॥

प्राप्ते यूपोच्छ्रये तस्मिन् षड्बैल्वाः खादिरास्तथा ।
तावन्तो बिल्वसहिताः पर्णिनश्च तथापरे ॥ २० ॥

श्लेष्मातकमयो दिष्टो देवदारुमयस्तथा ।
द्वावेव तत्र विहितौ बाहुव्यस्तपरिग्रहौ ॥ २१ ॥

कारिताः सर्व एवैते शास्त्रज्ञैर्यज्ञकोविदैः ।
शोभार्थं तस्य यज्ञस्य काञ्चनालंकृता भवन् ॥ २२ ॥

एकविंशतियूपास्त एकविंशत्यरत्नयः ।
वासोभिरेकविंशद्भिरेकैकं समलंकृताः ॥ २३ ॥

विन्यस्ता विधिवत् सर्वे शिल्पिभिः सुकृता दृढाः ।
अष्टाश्रयः सर्व एव श्लक्ष्णरूपसमन्विताः ॥ २४ ॥

आच्छादितास्ते वासोभिः पुष्पैर्गन्धैश्च भूषिताः ।
सप्तर्षयो दीप्तिमन्तो विराजन्ते यथा दिवि ॥ २५ ॥

आह्वयांचक्रिरे तत्र शक्रादीन् विबुधोत्तमान् ।
ऋश्यशृङ्गादयो मन्त्रैः शीक्षाक्षरसमन्वितैः ॥ २६ ॥

नीतिभिर्मधुरैः स्निग्धैर्मन्त्राह्वानैर्यथार्हतः ।
होतारो ददुराभाष्य हविर्भागान् दिवौकसाम् ॥ २७ ॥

इष्टकाश्च यथान्यायं कारिताश्च प्रमाणतः ।
चित्योऽग्निर्ब्राह्मणैस्तत्र कुशलैः शुल्बकर्मणि ॥ २८ ॥

स चित्यो राजसिंहस्य सञ्चितः कुशलैर्द्विजैः ।
गरुडो रुक्मपक्षो वै त्रिगुणोऽष्टादशात्मकः ॥ २९ ॥

नियुक्तास्तत्र पशवस्तत्तदुद्दिश्य दैवतम् ।
उरगाः पक्षिणश्चैव यथाशास्त्रं प्रचोदिताः ॥ ३० ॥

शामित्रे तु हयस्तत्र तथा जलचराश्च ये ।
ऋषिभिः सर्वमेवैतन्नियुक्तं शास्त्रतस्तथा ॥ ३१ ॥

पशूनां त्रिशतं तत्र यूपेषु नियतं तदा ।
अश्वरत्नोत्तमं तत्र राज्ञो दशरथस्य च ॥ ३२ ॥

कौसल्या तं हयं तत्र परिचर्यासमन्विता ।
कृपाणैर्विशशासैनं त्रिभिः परमया मुदा ॥ ३३ ॥

पतत्रिणा तदा सार्धं सुस्थितेन च चेतसा ।
अवसद्रजनीमेकां कौसल्या धर्मकाम्यया ॥ ३४ ॥

होताऽध्वर्युस्तथोद्गाता हयेन समयोजयन् ।
महिष्या परिवृत्त्या च वावातां च तथाऽपराम् ॥ ३५ ॥

पतत्रिणस्तस्य वपामुद्धृत्य नियतेन्द्रियः ।
ऋत्विक् परमसंपन्नः श्रपयामास शास्त्रतः ॥ ३६ ॥

धूमगन्धं वपायास्तु जिघ्रन्ति स्म नराधिपाः ।
यथाकालं यथान्यायं निर्णुदन् पापमात्मनः ॥ ३७ ॥

हयस्य यानि चाङ्गानि तानि सर्वाणि ब्राह्मणाः ।
अग्नौ प्रास्यन्ति विधिवत् समस्ताः षोडशर्त्विजः ॥ ३८ ॥

प्लक्षशाखासु यज्ञानामन्येषां क्रियते हविः ।
अश्वमेधस्य चैकस्य वतसो भाग इष्यते ॥ ३९ ॥

त्र्यहोऽश्वमेधः संख्यातः कल्पसूत्रेण ब्राह्मणैः ।
अग्निष्टोममहस्तस्य प्रथमं परिकल्पितम् ॥
उक्थ्यं द्वितीयं संख्यातमतिरात्रं तथोत्तरम् ॥ ४० ॥

कारितास्तत्र बहवो विहिताः शास्त्रदर्शनात् ॥ ४१ ॥

ज्योतिष्टोमायुषी चैवमतिरात्रौ विनिर्मितौ ।
अभिजिद्विश्वजिच्चैवमाप्तोर्यामो महाक्रतुः ।
अयजद्वाजिमेधेन दिशस्स्वकुलवर्धनः ॥ ४२ ॥

प्राचीं होत्रे ददौ राजा दिशं स्वकुलवर्धनः ।
अध्वर्यवे प्रतीचीं तु ब्रह्मणे दक्षिणां दिशम् ॥ ४३ ॥

उद्गात्रे तु तथोदीचीं दक्षिणैषा विनिर्मिता ।
अश्वमेधे महायज्ञे स्वयंभुविहिते पुरा ॥ ४४ ॥

क्रतुं समाप्य तु तदा न्यायतः पुरुषर्षभः ।
ऋत्विग्भ्यो हि ददौ राजा धरां तां कुलवर्धनः ॥ ४५ ॥

ऋत्विजश्चाब्रुवन् सर्वे राजानं गतकल्मषम् ।
भवानेव महीं कृत्स्नामेको रक्षितुमर्हति ॥ ४६ ॥

न भूम्या कार्यमस्माकं न हि शक्ताः स्म पालने ।
रताः स्वाध्यायकरणे वयं नित्यं हि भूमिप ।
निष्क्रयं किञ्चिदेवेह प्रयच्छतु भवान् हि नः ॥ ४७ ॥

मणिरत्नं सुवर्णं वा गावो यद्वा समुद्यतम् ।
तत् प्रयच्छ नरश्रेष्ठ धरण्या न प्रयोजनम् ॥ ४८ ॥

एवमुक्तो नरपतिर्ब्राह्मणैर्वेदपारगैः ।
गवां शतसहस्राणि दश तेभ्यो ददौ नृपः ॥ ४९ ॥

दश कोटीस्सुवर्णस्य रजतस्य चतुर्गुणम् ॥ ५० ॥

ऋत्विजश्च ततः सर्वे प्रददुः सहिता वसु ।
ऋश्यश्रृङ्गाय मुनये वसिष्ठाय च धीमते ॥ ५१ ॥

ततस्ते न्यायतः कृत्वा प्रविभागं द्विजोत्तमाः ।
सुप्रीतमनसः सर्वे प्रत्यूचुर्मुदिता भृशम् ॥ ५२ ॥

ततः प्रसर्पकेभ्यस्तु हिरण्यं सुसमाहितः ।
जाम्बूनदं कोटिसंख्यं ब्राह्मणेभ्यो ददौ तदा ॥ ५३ ॥

दरिद्राय द्विजायाथ हस्ताभरणमुत्तमम् ।
कस्मैचिद्याचमानाय ददौ राघवनन्दनः ॥ ५४ ॥

ततः प्रीतेषु विद्वत्सु द्विजेषु द्विजवत्सलः ।
प्रणाममकरोत्तेषां हर्षपर्याकुलेक्षणः ॥ ५५ ॥

तस्याऽशिषोऽथ विविधा ब्राह्मणैः समुदाहृताः ।
उदारस्य नृवीरस्य धरण्यां प्रणतस्य च ॥ ५६ ॥

ततः प्रीतमना राजा प्राप्य यज्ञमनुत्तमम् ।
पापापहं स्वर्नयनं दुस्तरं पार्थिवर्षभैः ॥ ५७ ॥

ततोऽब्रवीदृश्यश्रृङ्गं राजा दशरथस्तदा ।
कुलस्य वर्धनं तन्तुं कर्तुमर्हसि सुव्रत ॥ ५८ ॥

तथेति च स राजानमुवाच द्विजसत्तमः ।
भविष्यन्ति सुता राजंश्चत्वारस्ते कुलोद्वहाः ॥ ५९ ॥

स तस्य वाक्यं मधुरं निशम्य
प्रणम्य तस्मै प्रयतो नृपेन्द्रः ।
जगाम हर्षं परमं महात्मा
तमृश्यशृङ्गः पुनरप्युवाच ॥ ६० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे चतुर्दशः सर्गः ॥
आदितः श्लोकाः 518

पञ्चदशः सर्गः ॥ १५ ॥

पुत्रकामेष्टिः रावणवधप्रतिज्ञा च

मेधावी तु ततो ध्यात्वा स किञ्चिदिदमुत्तरम् ।
लब्धसंज्ञस्ततस्तं तु वेदज्ञो नृपमब्रवीत् ॥ १ ॥

इष्टिं तेऽहं करिष्यामि पुत्रीयां पुत्रकारणात् ।
अथर्वशिरसि प्रोक्तैर्मन्त्रैः सिद्धां विधानतः ॥ २ ॥

ततः प्राक्रामदिष्टिं तां पुत्रीयां पुत्रकारणात् ।
जुहाव चाग्नौ तेजस्वी मन्त्रदृष्टेन कर्मणा ॥ ३ ॥

ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
भागप्रतिग्रहार्थं वै समवेता यथाविधि ॥ ४ ॥

ताः समेत्य यथान्यायं तस्मिन् सदसि देवताः ।
अब्रुवंल्लोककर्तारं ब्रह्माणं वचनं महत् ॥ ५ ॥

भगवंस्त्वत्प्रसादेन रावणो नाम राक्षसः ।
सर्वान्नो बाधते वीर्याच्छासितुं तं न शक्नुमः ॥ ६ ॥

त्वया तस्मै वरो दत्तः प्रीतेन भगवन् पुरा ।
मानयन्तश्च तं नित्यं सर्वं तस्य क्षमामहे ॥ ७ ॥

उद्वेजयति लोकांस्त्रीनुच्छ्रितान् द्वेष्टि दुर्मतिः ।
शक्रं त्रिदशराजानं प्रधर्षयितुमिच्छति ॥ ८ ॥

ऋषीन् यक्षान् सगन्धर्वानसुरान् ब्राह्मणांस्तथा ।
अतिक्रामति दुर्धर्षो वरदानेन मोहितः ॥ ९ ॥

नैनं सूर्यः प्रतपति पार्श्वे वाति न मारुतः ।
चलोर्मिमाली तं दृष्ट्वा समुद्रोऽपि न कम्पते ॥ १० ॥

तन्महान्नो भयं तस्माद्राक्षसाद्घोरदर्शनात् ।
वधार्थं तस्य भगवन्नुपायं कर्तुमर्हसि ॥ ११ ॥

एवमुक्तः सुरैः सर्वैश्चिन्तयित्वा ततोऽब्रवीत् ।
हन्तायं विहितस्तस्य वधोपायो दुरात्मनः ॥ १२ ॥

तेन गन्धर्वयक्षाणां देवदानवरक्षसाम् ।
अवध्योऽस्मीति वागुक्ता तथेत्युक्तं च तन्मया ॥ १३ ॥

नाकीर्तयदवज्ञानात्तद्रक्षो मानुषान् प्रति ।
तस्मात् स मानुषाद्वध्यो मृत्युर्नान्योऽस्य विद्यते ॥ १४ ॥

एतच्छ्रुत्वा प्रियं वाक्यं ब्रह्मणा समुदाहृतम् ।
सर्वे महर्षयो देवाः प्रहृष्टास्तेऽभवंस्तदा ॥ १५ ॥

एतस्मिन्नन्तरे विष्णुरुपयातो महाद्युतिः ।
शङ्खचक्रगदापाणिः पीतवासा जगत्पतिः ॥ १६ ॥

वैनतेयं समारुह्य भास्करस्तोयदं यथा ।
तप्तहाटककेयूरः पूज्यमानः सुरोत्तमैः ॥ १७ ॥

ब्रह्मणा च समागम्य तत्र तस्थौ समाहितः ।
तमब्रुवन् सुराः सर्वे समभिष्टूय संनताः ॥ १८ ॥

त्वां नियोक्ष्यामहे विष्णो लोकानां हितकाम्यया॥१९॥

राज्ञो दशरथस्य त्वमयोध्याधिपतेः प्रभो ।
धर्मज्ञस्य वदान्यस्य महर्षिसमतेजसः ॥ २० ॥

तस्य भार्यासु तिसृषु ह्रीश्रीकीर्त्युपमासु च ।
विष्णो पुत्रत्वमागच्छ कृत्वाऽऽत्मानं चतुर्विधम् ॥२१॥

तत्र त्वं मानुषो भूत्वा प्रवृद्धं लोककण्टकम् ।
अवध्यं दैवतैर्विष्णो समरे जहि रावणम् ॥ २२ ॥

स हि देवान् सगन्धर्वान् सिद्धांश्च ऋषिसत्तमान् ।
रावणो राक्षसो मूर्खो वीर्योत्सेकेन बाधते ॥ २३ ॥

ऋषयस्तु ततः सर्वे गन्धर्वाप्सरसस्तथा ।
क्रीडन्तो नन्दनवने रौद्रेण किल हिंसिताः ॥ २४ ॥

वधार्थं वयमायातास्तस्य वै मुनिभिः सह ।
सिद्धगन्धर्वयक्षाश्च ततस्त्वां शरणं गताः ॥ २५ ॥

त्वं गतिः परमा देव सर्वेषां नः परन्तप ।
वधाय देवशत्रूणां नृणां लोके मनः कुरु ॥ २६ ॥

एवमुक्तस्तु देवेशो विष्णुस्त्रिदशपुङ्गवः ।
पितामहपुरोगांस्तान् सर्वलोकनमस्कृतः ॥
अब्रवीत्त्रिदशान् सर्वान् समेतान्धर्मसंहितान् ॥ २७ ॥

भयं त्यजत भद्रं वो हितार्थं युधि रावणम् ।
सपुत्रपौत्रं सामात्यं समित्रज्ञातिबान्धवम् ॥ २८ ॥

हत्वा क्रूरं दुरात्मानं देवर्षीणां भयावहम् ।
दशवर्षसहस्राणि दशवर्षशतानि च ॥ २९ ॥

वत्स्यामि मानुषे लोके पालयन् पृथिवीमिमाम् ॥ ३० ॥

एवं दत्त्वा वरं देवो देवानां विष्णुरात्मवान् ।
मानुषे चिन्तयामास जन्मभूमिमथात्मनः ॥ ३१ ॥

ततः पद्मपलाशाक्षः कृत्वाऽऽत्मानं चतुर्विधम् ।
पितरं रोचयामास तदा दशरथं नृपम् ॥ ३२ ॥

तदा देवर्षिगन्धर्वाः सरुद्रा साप्सरोगणाः ।
स्तुतिभिर्दिव्यरूपाभिस्तुष्टुवुर्मधुसूदनम् ॥ ३३ ॥

त्वमुद्धतं रावणमुग्रतेजसं प्रवृद्धदर्पं त्रिदशेश्वरद्विषम् ।
विरावणं साधु तपस्विकण्टकं तपस्विनामुद्धर तं भयावहम् ॥

तमेव हत्वा सबलं सबान्धवं विरावणं रावणमुग्रपौरुषम् ।
स्वर्लोकमागच्छ गतज्वरश्चिरं सुरेन्द्रगुप्तं गतदोषकल्मषम् ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे पञ्चदशः सर्गः ॥
आदितः श्लोकाः 553.

## षोडशः सर्गः ॥ १६ ॥

पायसप्रदानम् ॥

ततो नारायणो विष्णुर्नियुक्तः सुरसत्तमैः ।
जानन्नपि सुरांश्चैवं श्लक्ष्णं वचनमब्रवीत् ॥ १ ॥

उपायः को वधे तस्य राक्षसाधिपतेः सुराः ।
यमहं तं समास्थाय निहन्यामृषिकण्टकम् ॥ २ ॥

एवमुक्ताः सुराः सर्वे प्रत्यूचुर्विष्णुमव्ययम् ।
मानुषं रूपमास्थाय रावणं जहि संयुगे ॥ ३ ॥

स हि तेपे तपस्तीव्रं दीर्घकालमरिंदम ।
येन तुष्टोऽभवद्ब्रह्मा लोककृल्लोकपूर्वजः ॥ ४ ॥

सन्तुष्टः प्रददौ तस्मै राक्षसाय वरं प्रभुः ।
नानाविधेभ्यो भूतेभ्यो भयं नान्यत्र मानुषात् ॥ ५ ॥

अवज्ञाताः पुरा तेन वरदाने हि मानवाः ॥ ६ ॥

एवं पितामहात्तस्माद्वरं प्राप्य स दर्पितः ।
उत्सादयति लोकांस्त्रीन् स्त्रियश्चाप्यपकर्षति ॥
तस्मात्तस्य वधो दृष्टो मानुषेभ्यः परन्तप ॥ ७ ॥

इत्येतद्वचनं श्रुत्वा सुराणां विष्णुरात्मवान् ।
पितरं रोचयामास तदा दशरथं नृपम् ॥ ८ ॥

स चाप्यपुत्रो नृपतिस्तस्मिन् काले महाद्युतिः ।
अयजत् पुत्रियामिष्टिं पुत्रेप्सुररिसूदनः ॥ ९ ॥

स कृत्वा निश्चयं विष्णुरामन्त्र्य च पितामहम् ।
अन्तर्धानं गतो देवैः पूज्यमानो महात्मभिः ॥ १० ॥

ततो वै यजमानस्य पावकादतुलप्रभम् ।
प्रादुर्भूतं महद्भूतं महावीर्यं महाबलम् ॥ ११ ॥

कृष्णं रक्ताम्बरधरं रक्तास्यं दुन्दुभिस्वनम् ।
स्निग्धहर्यक्षतनुजश्मश्रुप्रवरमूर्धजम् ॥ १२ ॥

शुभलक्षणसम्पन्नं दिव्याभरणभूषितम् ।
शैलशृङ्गसमुत्सेधं दृप्तशार्दूलविक्रमम् ॥ १३ ॥

दिवाकरसमाकारं दीप्तानलशिखोपमम् ।
सिंहस्कन्धं महाबाहुमङ्गदद्वयशोभितम् ॥ १४ ॥

ताराधिपतिकल्पेन हारेणोरसि राजितम् ।
ताराधिपतिकल्पैश्च दन्तैः परमशोभितम् ॥ १५ ॥

ज्वलन्निव च तेजोभिर्दीपयन्निव च श्रिया।
तप्तजाम्बूनदमयीं राजतान्तपरिच्छदाम् ॥ १६ ॥

दिव्यपायससम्पूर्णां पात्रीं पत्नीमिव प्रियाम्।
प्रगृह्य विपुलां दोर्भ्यां स्वयं मायामयीमिव ॥ १७ ॥

समवेक्ष्याब्रवीद्वाक्यमिदं दशरथं नृपम्।
प्राजापत्यं नरं विद्धि मामिहाभ्यागतं नृप ॥ १८ ॥

ततः परं तदा राजा प्रत्युवाच कृताञ्जलिः।
भगवन् स्वागतं तेऽस्तु किमहं करवाणि ते ॥ १९ ॥

अथो पुनरिदं वाक्यं प्राजापत्यो नरोऽब्रवीत्।
राजन्नर्चयता देवानद्य प्राप्तमिदं त्वया ॥ २० ॥

इदं तु नृपशार्दूल पायसं देवनिर्मितम्।
प्रजाकरं गृहाण त्वं धन्यमारोग्यवर्धनम् ॥ २१ ॥

भार्याणामनुरूपाणामश्नीतेति प्रयच्छ वै।
तासु त्वं प्राप्स्यसे पुत्रान् यदर्थं यजसे नृप ॥ २२ ॥

तथेति नृपतिः प्रीतः शिरसा प्रतिगृह्य ताम्।
पात्रीं देवान्नसंपूर्णां देवदत्तां हिरण्मयीम् ॥ २३ ॥

अभिवाद्य च तद्भूतमद्भुतं प्रियदर्शनम्।
मुदा परमया युक्तश्चकाराभिप्रदक्षिणम् ॥ २४ ॥

ततो दशरथः प्राप्य पायसं देवनिर्मितम्।
बभूव परमप्रीतः प्राप्य वित्तमिवाधनः ॥ २५ ॥

ततस्तदद्भुतप्रख्यं भूतं परमभास्वरम् ।
संवर्तयित्वा तत्कर्म तत्रैवान्तरधीयत ॥ २६ ॥
हर्षरश्मिभिरुद्योतं तस्यान्तःपुरमाबभौ ।
शारदस्याभिरामस्य चन्द्रस्येव नवांशुभिः ॥ २७ ॥
सोऽन्तपुरं प्रविश्यैव कौसल्यामिदमब्रवीत् ।
पायसं प्रतिगृह्णीष्व पुत्रीयं त्विदमात्मनः ॥ २८ ॥
कौसल्यायै नरपतिः पायसार्धं ददौ तदा ।
अर्धादर्धं ददौ चापि सुमित्रायै नराधिपः ॥
कैकेय्यै चावशिष्टार्धं ददौ पुत्रार्थकारणात् ॥ २९ ॥
प्रददौ चावशिष्टार्धं पायसस्यामृतोपमम् ।
अनुचिन्त्य सुमित्रायै पुनरेव महीपतिः ॥ ३० ॥
एवं तासां ददौ राजा भार्याणां पायसं पृथक् ॥ ३१ ॥
तास्त्वेतत्पायसं प्राप्य नरेन्द्रस्योत्तमाः स्त्रियः ।
सम्मानं मेनिरे सर्वाः प्रहर्षोदितचेतसः ॥ ३२ ॥
ततस्तु ताः प्राश्य तदुत्तमस्त्रियो महीपतेरुत्तमपायसं पृथक् ।
हुताशनादित्यसमानतेजसोऽचिरेण गर्भान् प्रतिपेदिरे तदा ॥
ततस्तु राजा प्रसमीक्ष्य ताः स्त्रियः प्ररूढगर्भाः प्रतिलब्धमानसः।
बभूव हृष्टस्त्रिदिवे यथा हरिः सुरेन्द्रसिद्धर्षिगणाभिपूजितः ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे षोडशः सर्गः ॥
आदितः श्लोकाः 587.

## सप्तदशः सर्गः ॥ १७ ॥

### ऋक्षवानराद्युत्पत्तिः ॥

पुत्रत्वं तु गते विष्णौ राज्ञोऽस्य सुमहात्मनः ।
उवाच देवताः सर्वाः स्वयंभूर्भगवानिदम् ॥ १ ॥

सत्यसन्धस्य वीरस्य सर्वेषां नो हितैषिणः ।
विष्णोः सहायान् बलिनः सृजध्वं कामरूपिणः ॥ २ ॥

मायाविदश्च शूरांश्च वायुवेगसमाञ्जवे ।
नयज्ञान् बुद्धिसंपन्नान् विष्णोस्तुल्यपराक्रमान् ॥ ३ ॥

असंहार्यानुपायज्ञान् दिव्यसंहननान्वितान् ।
सर्वास्त्रगुणसंपन्नानमृतप्राशनानिव ॥ ४ ॥

अप्सरस्सु च मुख्यासु गन्धर्वीणां तनूषु च ।
यक्षपन्नगकन्यासु ऋक्षविद्याधरीषु च ॥ ५ ॥

किन्नरीणां च गात्रेषु वानरीणां तनूषु च ।
सृजध्वं हरिरूपेण पुत्रांस्तुल्यपराक्रमान् ॥ ६ ॥

पूर्वमेव मया सृष्टो जाम्बवानृक्षपुङ्गवः ।
जृम्भमाणस्य सहसा मम वक्त्रादजायत ॥ ७ ॥

ते तथोक्ता भगवता तत्प्रतिश्रुत्य शासनम् ।
जनयामासुरेवं ते पुत्रान् वानररूपिणः ॥ ८ ॥

ऋषयश्च महात्मानः सिद्धविद्याधरोरगाः ।
चारणाश्च सुतान् वीरान् ससृजुर्वनचारिणः ॥ ९ ॥

वानरेन्द्रं महाभागमिन्द्रो वालिनमूर्जितम् ।
सुग्रीवं जनयामास तपनस्तपतां वरः ॥ १० ॥

बृहस्पतिस्त्वजनयत्तारं नाम महाकपिम् ।
धनदस्य सुतः श्रीमान् वानरो गन्धमादनः ॥ ११ ॥

सर्ववानरमुख्यानां बुद्धिमन्तमनुत्तमम् ।
विश्वकर्मा त्वजनयन्नलं नाम महाहरिम् ॥ १२ ॥

पावकस्य सुतः श्रीमान्नीलोऽग्निसदृशप्रभः ।
तेजसा यशसा वीर्यादत्यरिच्यत वानरान् ॥ १३ ॥

रूपद्रविणसम्पन्नावश्विनौ रूपसंमतौ ।
मैन्दं च द्विविदं चैव जनयामासतुः स्वयम् ॥ १४ ॥

वरुणो जनयामास सुषेणं नाम वानरम् ।
शरभं जनयामास पर्जन्यस्तु महाबलम् ॥ १५ ॥

मारुतस्यात्मजः श्रीमान् हनुमान्नाम वानरः ।
सर्ववानरमुख्येषु बुद्धिमान् बलवानपि ॥ १६ ॥

वज्रसंहननोपेतो वैनतेयसमो जवे ।
रुद्रस्य पुत्रो बलवान् हरिः सूर्याननः प्रभोः ॥ १७ ॥

ते सृष्टा बहुसाहस्रा दशग्रीववधे धृताः ।
अप्रमेयबला वीरा विक्रान्ताः कामरूपिणः ॥ १८ ॥

ते गजाचलसङ्काशा वपुष्मन्तो महाबलाः ।
ऋक्षवानरगोपुच्छाः क्षिप्रमेवाभिजज्ञिरे ॥ १९ ॥

यस्य देवस्य यद्रूपं वेषो यश्च पराक्रमः ।
अजायत समस्तेन तस्य तस्य सुतः पृथक् ॥ २० ॥

गोलाङ्गूलीषु चोत्पन्नाः केचित् संमतविक्रमाः ।
ऋक्षीषु च तथा जाता वानराः किन्नरीषु च ॥ २१ ॥

देवा महर्षिगन्धर्वास्तार्क्ष्ययक्षा यशस्विनः ।
नागाः किंपुरुषाश्चैव सिद्धविद्याधरोरगाः ॥ २२ ॥

बहवो जनयामासुर्हृष्टास्तत्र सहस्रशः ।
वानरान् सुमहाकायान् सर्वान् वै वनचारिणः ॥ २३ ॥

अप्सरस्सु च मुख्यासु तथा विद्याधरीषु च ।
नागकन्यासु च तथा गन्धर्वीणां तनूषु च ॥ २४ ॥

कामरूपबलोपेता यथाकामविचारिणः ।
सिंहशार्दूलसदृशा दर्पेण च बलेन च ॥ २५ ॥

शिलाप्रहरणाः सर्वे सर्वे पादपयोधिनः ।
नखदंष्ट्रायुधाः सर्वे सर्वे सर्वास्त्रकोविदाः ॥ २६ ॥

विचालयेयुः शैलेन्द्रान् भेदयेयुः स्थितान् द्रुमान् ।
क्षोभयेयुश्च वेगेन समुद्रं सरितां पतिम् ॥ २७ ॥

दारयेयुः क्षितिं पद्भ्यामाप्लवेयुर्महार्णवम् ।
नभःस्थलं विशेयुश्च गृह्णीयुरपि तोयदान् ॥ २८ ॥

गृह्णीयुरपि मातङ्गान् मत्तान् प्रव्रजितान् वने ।
नर्दमानाश्च नादेन पातयेयुर्विहङ्गमान् ॥ २९ ॥

ईदृशानां प्रसूतानि हरीणां कामरूपिणाम् ।
शतं शतसहस्राणि यूथपानां महात्मनाम् ॥ ३० ॥

ते प्रधानेषु यूथेषु हरीणां हरियूथपाः ।
बभूवुर्यूथपश्रेष्ठा वीरांश्चाजनयन् हरीन् ॥ ३१ ॥

अन्ये ऋक्षवतः प्रस्थानुपतस्थुः सहस्रशः ।
अन्ये नानाविधाञ्च्छैलान् काननानि च भेजिरे ॥

सूर्यपुत्रं च सुग्रीवं शक्रपुत्रं च वालिनम् ।
भ्रातरावुपतस्थुस्ते सर्व एव हरीश्वराः ।
नलं नीलं हनूमन्तमन्यांश्च हरियूथपान् ॥ ३३ ॥

ते तार्क्ष्यबलसम्पन्नाः सर्वे युद्धविशारदाः ।
विचरन्तोऽर्दयन्दर्पात् सिंहव्याघ्रमहोरगान् ॥ ३४ ॥

तांश्च सर्वान् महाबाहुर्वाली विपुलविक्रमः ।
जुगोप भुजवीर्येण ऋक्षगोपुच्छवानरान् ॥ ३५ ॥

तैरियं पृथिवी शूरैः सपर्वतवनार्णवा ।
कीर्णा विविधसंस्थानैर्नानाव्यञ्जनलक्षणैः ॥ ३६ ॥

तैर्मेघवृन्दाचलकूटकल्पैर्महाबलैर्वानरयूथपालैः ।
बभूव भूर्भीमशरीररूपैः समावृता रामसहायहेतोः ॥ ३७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे सप्तदशः सर्गः ॥

आदितः श्लोकाः **624.**

## अष्टादशः सर्गः ॥ १८ ॥

### श्रीरामावतारः ॥

निर्वृत्ते तु क्रतौ तस्मिन् हयमेधे महात्मनः ।
प्रतिगृह्य सुरा भागान् प्रतिजग्मुर्यथागतम् ॥ १ ॥

समाप्तदीक्षानियमः पत्नीगणसमन्वितः ।
प्रविवेश पुरीं राजा सभृत्यबलवाहनः ॥ २ ॥

यथार्हं पूजितास्तेन राज्ञा वै पृथिवीश्वराः ।
मुदिताः प्रययुर्देशान् प्रणम्य मुनिपुङ्गवम् ॥ ३ ॥

श्रीमतां गच्छतां तेषां स्वपुराणि पुरात्ततः ।
बलानि राज्ञां शुभ्राणि प्रहृष्टानि चकाशिरे ॥ ४ ॥

गतेषु पृथिवीशेषु राजा दशरथः पुनः ।
प्रविवेश पुरीं श्रीमान् पुरस्कृत्य द्विजोत्तमम् ॥ ५ ॥

शान्तया प्रययौ सार्धमृश्यशृङ्गः सुपूजितः ।
अन्वीयमानो राज्ञाऽथ सानुयात्रेण धीमता ॥ ६ ॥

एवं विसृज्य तान् सर्वान् राजा संपूर्णमानसः ।
उवास सुखितस्तत्र पुत्रोत्पत्तिं विचिन्तयन् ॥ ७ ॥

ततो यज्ञे समाप्ते तु ऋतूनां षट् समत्ययुः ॥ ८ ॥

ततश्च द्वादशे मासे चैत्रे नावमिके तिथौ ।
नक्षत्रेऽदितिदैवत्ये स्वोच्चसंस्थेषु पञ्चसु ॥ ९ ॥

ग्रहेषु कर्कटे लग्ने वाक्पताविन्दुना सह ।
प्रोद्यमाने जगन्नाथं सर्वलोकनमस्कृतम् ॥ १० ॥

कौसल्याऽजनयद्रामं दिव्यलक्षणसंयुतम् ।
विष्णोरर्धं महाभागं पुत्रमिक्ष्वाकुनन्दनम् ॥ ११ ॥

कौसल्या शुशुभे तेन पुत्रेणामिततेजसा ।
यथा वरेण देवानामदितिर्वज्रपाणिना ॥ १२ ॥

भरतो नाम कैकेय्यां जज्ञे सत्यपराक्रमः ।
साक्षाद्विष्णोश्चतुर्भागः सर्वैः समुदितो गुणैः ॥ १३ ॥

अथ लक्ष्मणशत्रुघ्नौ सुमित्राऽजनयत् सुतौ ।
वीरौ सर्वास्त्रकुशलौ विष्णोरर्धसमन्वितौ ॥ १४ ॥

पुष्ये जातस्तु भरतो मीनलग्ने प्रसन्नधीः ।
सार्पे जातौ च सौमित्री कुलीरेऽभ्युदिते रवौ ॥ १५ ॥

राज्ञः पुत्रा महात्मानश्चत्वारो जज्ञिरे पृथक् ।
गुणवन्तोऽनुरूपाश्च रुच्या प्रोष्ठपदोपमाः ॥ १६ ॥

जगुः कलं च गन्धर्वा ननृतुश्चाप्सरोगणाः ।
देवदुन्दुभयो नेदुः पुष्पवृष्टिश्च खाच्च्युता ॥ १७ ॥

उत्सवश्च महानासीदयोध्यायां जनाकुलः ॥ १८ ॥

रथ्याश्च जनसंबाधा नटनर्तकसंकुलाः ।
गायकैश्च विराविण्यो वादकैश्च तथाऽपरैः ॥ १९ ॥

प्रदेयांश्च ददौ राजा सूतमागधवन्दिनाम् ।
ब्राह्मणेभ्यो ददौ वित्तं गोधनानि सहस्रशः ॥
अतीत्यैकादशाहं तु नामकर्म तथाऽकरोत् ॥ २० ॥

ज्येष्ठं रामं महात्मानं भरतं कैकयीसुतम् ।
सौमित्रिं लक्ष्मणमिति शत्रुघ्नमपरं तथा ।
वसिष्ठः परमप्रीतो नामानि कृतवांस्तदा ॥ २१ ॥

ब्राह्मणान् भोजयामास पौरजानपदानपि ।
अददाद्ब्राह्मणानां च रत्नौघममितं बहु ।
तेषां जन्मक्रियादीनि सर्वकर्माण्यकारयत् ॥ २२ ॥

तेषां केतुरिव ज्येष्ठो रामो रतिकरः पितुः ।
बभूव भूयो भूतानां स्वयंभूरिव संमतः ॥ २३ ॥

सर्वे वेदविदः शूराः सर्वे लोकहिते रताः ।
सर्वे ज्ञानोपपन्नाश्च सर्वे समुदिता गुणैः ॥ २४ ॥

तेषामपि महातेजा रामः सत्यपराक्रमः ।
इष्टः सर्वस्य लोकस्य शशाङ्क इव निर्मलः ॥ २५ ॥

गजस्कन्धेऽश्वपृष्ठे च रथचर्यासु संमतः ।
धनुर्वेदे च निरतः पितृशुश्रूषणे रतः ॥ २६ ॥

बाल्यात् प्रभृति सुस्निग्धो लक्ष्मणो लक्ष्मिवर्धनः ।
रामस्य लोकरामस्य भ्रातुर्ज्येष्ठस्य नित्यशः ॥ २७ ॥

सर्वप्रियकरस्तस्य रामस्यापि शरीरतः ।
लक्ष्मणो लक्ष्मिसंपन्नो बहिःप्राण इवापरः ॥ २८ ॥

न च तेन विना निद्रां लभते पुरुषोत्तमः ।
मृष्टमन्नमुपानीतमश्नाति न हि तं विना ॥ २९ ॥

यदा हि हयमारूढो मृगयां याति राघवः ।
अथैनं पृष्ठतो याति सधनुः परिपालयन् ॥ ३० ॥

भरतस्यापि शत्रुघ्नो लक्ष्मणावरजो हितः ।
प्राणैः प्रियतरो नित्यं तस्य चासीत्तथा प्रियः ॥ ३१ ॥

स चतुर्भिर्महाभागैः पुत्रैर्दशरथः प्रियैः ।
बभूव परमप्रीतो देवैरिव पितामहः ॥ ३२ ॥

ते यदा ज्ञानसम्पन्नाः सर्वे समुदिता गुणैः ।
ह्रीमन्तः कीर्तिमन्तश्च सर्वज्ञा दीर्घदर्शिनः ॥ ३३ ॥

तेषामेवंप्रभावानां सर्वेषां दीप्ततेजसाम् ।
पिता दशरथो हृष्टो ब्रह्मा लोकाधिपो यथा ॥ ३४ ॥

ते चापि मनुजव्याघ्रा वैदिकाध्ययने रताः ।
गुरुशुश्रूषणपरा धनुर्वेदे च निष्ठिताः ॥ ३५ ॥

अथ राजा दशरथस्तेषां दारक्रियां प्रति ।
चिन्तयामास धर्मात्मा सोपाध्यायः सबान्धवः ॥ ३६ ॥

तस्य चिन्तयमानस्य मन्त्रिमध्ये महात्मनः ।
अभ्यागच्छन्महातेजा विश्वामित्रो महामुनिः ॥ ३७ ॥

स राज्ञो दर्शनाकाङ्क्षी द्वाराध्यक्षानुवाच ह ।
शीघ्रमाख्यात मां प्राप्तं कौशिकं गाधिनन्दनम् ॥ ३८ ॥

तच्छ्रुत्वा वचनं तस्य राज्ञो वेश्म प्रदुद्रुवुः ।
संभ्रान्तमनसः सर्वे तेन वाक्येन चोदिताः ॥ ३९ ॥

ते गत्वा राजभवनं विश्वामित्रमृषिं तदा ।
प्राप्तमावेदयामासुर्नृपायैक्ष्वाकवे तदा ॥ ४० ॥

तेषां तद्वचनं श्रुत्वा सपुरोधाः समाहितः ।
प्रत्युज्जगाम तं हृष्टो ब्रह्माणमिव वासवः ॥ ४१ ॥

स दृष्ट्वा ज्वलितं दीप्त्या तापसं संशितव्रतम् ।
प्रहृष्टवदनो राजा ततोऽर्घ्यं समुपाहरत् ॥ ४२ ॥

स राज्ञः प्रतिगृह्यार्घ्यं शास्त्रदृष्टेन कर्मणा ।
कुशलं चाव्ययं चैव पर्यपृच्छन्नराधिपम् ॥ ४३ ॥

पुरे कोशे जनपदे बान्धवेषु सुहृत्सु च ।
कुशलं कौशिको राज्ञः पर्यपृच्छत् सुधार्मिकः ॥ ४४ ॥

अपि ते सन्नताः सर्वे सामन्ता रिपवो जिताः ।
दैवं च मानुषं चापि कर्म ते साध्वनुष्ठितम् ॥ ४५ ॥

वसिष्ठं च समागम्य कुशलं मुनिपुङ्गवः ।
ऋषींश्चान्यान् यथान्यायं महाभागानुवाच ह ॥ ४६ ॥

ते सर्वे हृष्टमनसस्ततो राज्ञो निवेशनम् ।
विविशुः पूजितास्तत्र निषेदुश्च यथार्हतः ॥ ४७ ॥

अथ हृष्टमना राजा विश्वामित्रं महामुनिम् ।
उवाच परमोदारो हृष्टः समभिपूजयन् ॥ ४८ ॥

यथाऽमृतस्य संप्राप्तिर्यथा वर्षमनूदके ।
यथा सदृशदारेषु पुत्रजन्म प्रशस्यते ॥ ४९ ॥
प्रनष्टस्य यथा लाभो यथा हर्षो महोदये ।
तथैवागमनं मन्ये स्वागतं ते महामुने ॥ ५० ॥
कं च ते परमं कामं करोमि किमु हर्षितः ।
पात्रभूतोऽसि मे विप्र दिष्ट्या प्राप्तोऽसि धार्मिक ॥
अद्य मे सफलं जन्म जीवितं च सुजीवितम् ॥ ५२ ॥
पूर्वं राजर्षिशब्देन तपसा द्योतितप्रभः ।
ब्रह्मर्षित्वमनुप्राप्तः पूज्योऽसि बहुधा मया ॥ ५३ ॥
तदद्भुतमिदं विप्र पवित्रं परमं मम ।
शुभक्षेत्रगतश्चाहं तव संदर्शनात् प्रभो ॥ ५४ ॥
ब्रूहि यत्प्रार्थितं तुभ्यं कार्यमागमनं प्रति ।
इच्छाम्यनुगृहीतोऽहं त्वदर्थपरिवृद्धये ॥ ५५ ॥
कार्यस्य न विमर्शं च गन्तुमर्हसि कौशिक ।
कर्ता चाहमशेषेण दैवतं हि भवान् मम ॥ ५६ ॥
मम चायमनुप्राप्तो महानभ्युदयो द्विज ।
तवागमनजः कृत्स्नो धर्मश्चानुत्तमो मम ॥ ५७ ॥
इति हृदयसुखं निशम्य वाक्यं श्रुतिसुखमात्मवता विनीतमुक्तम् ।
प्रथितगुणयशा गुणैर्विशिष्टः परमऋषिःपरमं जगाम हर्षम् ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे अष्टादशः सर्गः ॥

आदितः श्लोकाः 682

## एकोनविंशः सर्गः ॥ १९ ॥

### विश्वामित्रेण श्रीरामयाचनम् ॥

तच्छ्रुत्वा राजसिंहस्य वाक्यमद्भुतविस्तरम् ।
हृष्टरोमा महातेजा विश्वामित्रोऽभ्यभाषत ॥ १ ॥

सदृशं राजशार्दूल तवैव भुवि नान्यतः ।
महावंशप्रसूतस्य वसिष्ठव्यपदेशिनः ॥ २ ॥

यत्तु मे हृद्गतं वाक्यं तस्य कार्यस्य निश्चयम् ।
कुरुष्व राजशार्दूल भव सत्यप्रतिश्रवः ॥ ३ ॥

अहं नियममातिष्ठे सिद्ध्यर्थं पुरुषर्षभ ।
तस्य विघ्नकरौ द्वौ तु राक्षसौ कामरूपिणौ ॥ ४ ॥

मारीचश्च सुबाहुश्च वीर्यवन्तौ सुशिक्षितौ ।
तौ मांसरुधिरौघेण वेदिं तामभ्यवर्षताम् ॥ ५ ॥

व्रते मे बहुशश्चीर्णे समाप्त्यां राक्षसाविमौ ॥ ६ ॥

अवधूते तथाभूते तस्मिन्नियमनिश्चये ।
कृतश्रमो निरुत्साहस्तस्माद्देशादपाक्रमम् ॥ ७ ॥

न च मे क्रोधमुत्स्रष्टुं बुद्धिर्भवति पार्थिव ।
तथाभूता हि सा चर्या न शापस्तत्र मुच्यते ॥ ८ ॥

स्वपुत्रं राजशार्दूल रामं सत्यपराक्रमम् ।
काकपक्षधरं वीरं ज्येष्ठं मे दातुमर्हसि ॥ ९ ॥

शक्तो ह्येष मया गुप्तो दिव्येन स्वेन तेजसा ।
राक्षसा येऽपकर्तारस्तेषामपि विनाशने ॥ १० ॥

श्रेयश्चास्मै प्रदास्यामि बहुरूपं न संशयः ।
त्रयाणामपि लोकानां येन ख्यातिं गमिष्यति ॥ ११ ॥

न च तौ राममासाद्य शक्तौ स्थातुं कथञ्चन ।
न च तौ राघवादन्यो हन्तुमुत्सहते पुमान् ॥ १२ ॥

वीर्योत्सिक्तौ हि तौ पापौ कालपाशवशं गतौ ।
रामस्य राजशार्दूल न पर्याप्तौ महात्मनः ॥
न च पुत्रकृतं स्नेहं कर्तुमर्हसि पार्थिव ॥ १३ ॥

दशरात्रस्तु यज्ञश्च तस्मिन् रामेण राक्षसौ ।
हन्तव्यौ विघ्नकर्तारौ मम यज्ञस्य वैरिणौ ॥ १४ ॥

अहं ते प्रतिजानामि हतौ तौ विद्धि राक्षसौ ॥ १५ ॥

अहं वेद्मि महात्मानं रामं सत्यपराक्रमम् ।
वसिष्ठोऽपि महातेजा ये चेमे तपसि स्थिताः ॥ १६ ॥

यदि ते धर्मलाभं च यशश्च परमं भुवि ।
हितमिच्छसि राजेन्द्र रामं मे दातुमर्हसि ॥ १७ ॥

यद्यभ्यनुज्ञां काकुत्स्थ ददते तव मन्त्रिणः ।
वसिष्ठप्रमुखाः सर्वे ततो रामं विसर्जय ॥ १८ ॥

अभिप्रेतमसंसक्तमात्मजं दातुमर्हसि ।
दशरात्रं हि यज्ञस्य रामं राजीवलोचनम् ॥ १९ ॥

नात्येति कालो यज्ञस्य यथाऽयं मम राघव ।
तथा कुरुष्व भद्रं ते मा च शोके मनः कृथाः ॥ २०

इत्येवमुक्त्वा धर्मात्मा धर्मार्थसहितं वचः ।
विरराम महातेजा विश्वामित्रो महामुनिः ॥ २१

स तन्निशम्य राजेन्द्रो विश्वामित्रवचः शुभम् ।
शोकमभ्यगमत्तीव्रं व्यषीदत भयान्वितः ॥ २२ ।

इति हृदयमनोविदारणं
मुनिवचनं तदतीव शुश्रुवान् ।
नरपतिरभवन्महान् महात्मा
व्यथितमनाः प्रचचाल चासनात् ॥ २३ ।

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे एकोनविंशः सर्गः ॥
आदितः श्लोकाः 705

विंशः सर्गः ॥ २० ॥

दशरथस्य प्रत्याख्यानम् ॥

तच्छ्रुत्वा राजशार्दूलो विश्वामित्रस्य भाषितम् ।
मुहूर्तमिव निस्संज्ञः संज्ञावानिदमब्रवीत् ॥ १ ॥

ऊनषोडशवर्षो मे रामो राजीवलोचनः ।
न युद्धयोग्यतामस्य पश्यामि सह राक्षसैः ॥ २ ॥

इयमक्षौहिणी पूर्णा यस्याहं पतिरीश्वरः ।
अनया संवृतो गत्वा योद्धाऽहं तैर्निशाचरैः ॥ ३ ॥

इमे शूराश्च विक्रान्ता भृत्या मेऽस्त्रविशारदाः ।
योग्या रक्षोगणैर्योद्धुं न रामं नेतुमर्हसि ॥ ४ ॥

अहमेको धनुष्पाणिर्गोप्ता समरमूर्धनि ।
यावत् प्राणान् धरिष्यामि तावद्योत्स्ये निशाचरैः ॥ ५ ॥

निर्विघ्ना व्रतचर्या सा भविष्यति सुरक्षिता ।
अहं तत्र गमिष्यामि न रामं नेतुमर्हसि ॥ ६ ॥

बालो ह्यकृतविद्यश्च न च वेत्ति बलाबलम् ।
न चास्त्रबलसंयुक्तो न च युद्धविशारदः ॥
न चासौ रक्षसां योग्यः कूटयुद्धा हि ते ध्रुवम् ॥ ७ ॥

विप्रयुक्तो हि रामेण मुहूर्तमपि नोत्सहे ।
जीवितुं मुनिशार्दूल न रामं नेतुमर्हसि ॥ ८ ॥

यदि वा राघवं ब्रह्मन्नेतुमिच्छसि सुव्रत ।
चतुरङ्गसमायुक्तं मया च सहितं नय ॥ ९ ॥

षष्टिर्वर्षसहस्राणि जातस्य मम कौशिक ।
दुःखेनोत्पादितश्चायं न रामं नेतुमर्हसि ॥ १० ॥

चतुर्णामात्मजानां हि प्रीतिः पारमिका मम ।
ज्येष्ठं धर्मप्रधानं च न रामं नेतुमर्हसि ॥ ११ ॥

किंवीर्या राक्षसास्ते च कस्य पुत्राश्च के च ते ।
कथंप्रमाणाः के चैतान् रक्षन्ति मुनिपुङ्गव ॥ १२ ॥

कथं च प्रतिकर्तव्यं तेषां रामेण रक्षसाम् ।
मामकैर्वा बलैर्ब्रह्मन् मया वा कूटयोधिनाम् ॥ १३ ॥

सर्वं मे शंस भगवन् कथं तेषां मया रणे ।
स्थातव्यं दुष्टभावानां वीर्योत्सिक्ता हि राक्षसाः ॥
तस्य तद्वचनं श्रुत्वा विश्वामित्रोऽभ्यभाषत ॥ १५ ॥

पुलस्त्यवंशप्रभवो रावणो नाम राक्षसः ॥ १६ ॥

स ब्रह्मणा दत्तवरस्त्रैलोक्यं बाधते भृशम् ।
महाबलो महावीर्यो राक्षसैर्बहुभिर्वृतः ॥ १७ ॥

श्रूयते हि महावीर्यो रावणो राक्षसाधिपः ।
साक्षाद्वैश्रवणभ्राता पुत्रो विश्रवसो मुनेः ॥ १८ ॥
सदा न खलु यज्ञस्य विघ्नकर्ता महाबलः ।

तेन संचोदितौ तौ तु राक्षसौ कामरूपिणौ ॥
मारीचश्च सुबाहुश्च यज्ञविघ्नं करिष्यतः ॥ १९ ॥

इत्युक्तो मुनिना तेन राजोवाच मुनिं तदा ।
न हि शक्तोऽस्मि संग्रामे स्थातुं तस्य दुरात्मनः ॥

स त्वं प्रसादं धर्मज्ञ कुरुष्व मम पुत्रके ।
मम चैवाल्पभाग्यस्य दैवतं हि भवान् गुरुः ॥ २१ ॥

देवदानवगन्धर्वा यक्षाः पतगपन्नगाः ।
न शक्ता रावणं सोढुं किं पुनर्मानवा युधि ॥ २२ ॥

स हि वीर्यवतां वीर्यमादत्ते युधि राक्षसः ।
तेनाहं नैव शक्तोऽस्मि संयोद्धुं तस्य वा बलैः ॥
सबलो वा मुनिश्रेष्ठ सहितो वा ममात्मजैः ॥ २३ ॥

कथमप्यमरप्रख्यं संग्रामाणामकोविदम् ।
बालं मे तनयं ब्रह्मन्नैव दास्यामि पुत्रकम् ॥ २४ ॥

अथ कालोपमौ युद्धे सुतौ सुन्दोपसुन्दयोः ।
यज्ञविघ्नकरौ तेन नैव दास्यामि पुत्रकम् ॥ २५ ॥

तौ तु राक्षसकन्यायां जातौ दैत्यकुलोद्वहौ ।
मारीचश्च सुबाहुश्च वीर्यवन्तौ सुशिक्षितौ ॥ २६ ॥

तयोरन्यतरेणाहं योद्धा स्यां ससुहृद्गणः ।
अन्यथा त्वनुनेष्यामि भवन्तं सहबान्धवः ॥ २७ ॥

इति नरपतिजल्पनाद्द्विजेन्द्रं
कुशिकसुतं सुमहान् विवेश मन्युः ।
सुहुत इव मखेऽग्निराज्यसिक्तः
समभवदुज्ज्वलितो महर्षिवह्निः ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे विंशः सर्गः ॥

आदितः श्लोकाः 733

## एकविंशः सर्गः ॥ २१ ॥

### वसिष्ठवचनाद्रामप्रेषणः ॥

तच्छ्रुत्वा वचनं तस्य स्नेहपर्याकुलाक्षरम् ।
समन्युः कौशिको वाक्यं प्रत्युवाच महीपतिम् ॥ १ ॥

पूर्वमेव प्रतिश्रुत्य प्रतिज्ञां हातुमिच्छसि ।
राघवाणामयुक्तोऽयं कुलस्यास्य विपर्ययः ॥ २ ॥

यदीदं ते क्षमं राजन् गमिष्यामि यथाऽऽगतम् ।
मिथ्याप्रतिज्ञः काकुत्स्थ सुखी भव सबान्धवः ॥ ३ ॥

तस्य रोषपरीतस्य विश्वामित्रस्य धीमतः ।
चचाल वसुधा कृत्स्ना विवेश च भयं सुरान् ॥ ४ ॥

त्रस्तरूपं तु विज्ञाय जगत्सर्वं महानृषिः ।
नृपतिं सुव्रतो धीरो वसिष्ठो वाक्यमब्रवीत् ॥ ५ ॥

इक्ष्वाकूणां कुले जातः साक्षाद्धर्म इवापरः ।
धृतिमान् सुव्रतः श्रीमान्न धर्मं हातुमर्हसि ॥ ६ ॥

त्रिषु लोकेषु विख्यातो धर्मात्मा इति राघवः ।
स्वधर्मं प्रतिपद्यस्व नाधर्मं वोढुमर्हसि ॥ ७ ॥

आश्रुत्यैवं करिष्यामीत्युक्त्वा वाक्यमकुर्वतः ।
इष्टापूर्तक्षयो भूयात्तस्माद्रामं विसर्जय ॥ ८ ॥

कृतास्त्रमकृतास्त्रं वा नैनं शक्ष्यन्ति राक्षसाः ।
गुप्तं कुशिकपुत्रेण ज्वलनेनामृतं यथा ॥ ९ ॥

एष विग्रहवान्धर्म एष वीर्यवतां वरः ।
एष बुध्याऽधिको लोके तपसश्च परायणम् ॥ १० ॥

एषोऽस्त्रान् विविधान् वेत्ति त्रैलोक्ये सचराचरे ।
नैनमन्यः पुमान् वेत्ति न च वेत्स्यन्ति केचन ॥ ११ ॥

न देवा ऋषयः केचिन्नासुरा न च राक्षसाः ।
गन्धर्वयक्षप्रवराः सकिन्नरमहोरगाः ॥ १२ ॥

सर्वास्त्राणि भृशाश्वस्य पुत्राः परमधार्मिकाः ।
कौशिकाय पुरा दत्ता यदा राज्यं प्रशासति ॥ १३ ॥

तेऽपि पुत्रा भृशाश्वस्य प्रजापतिसुतास्तु ये ।
नैकरूपा महावीर्या दीप्तिमन्तो जयावहाः ॥ १४ ॥

जया च सुप्रभा चैव दक्षकन्ये सुमध्यमे ।
ते सुवातेऽस्त्रशस्त्राणि शतं परमभास्वरम् ॥ १५ ॥

पञ्चाशतं सुतांल्लेभे जया लब्धवरा पुरा ।
वधायासुरसैन्यानामक्षयान् कामरूपिणः ॥ १६ ॥

सुप्रभाऽजनयच्चापि पुत्रान् पञ्चाशतं पुनः ।
संहारान्नाम दूर्धर्षान्दुराक्रामान् बलीयसः ॥ १७ ॥

तानि चास्त्राणि वेत्त्येष यथावत् कुशिकात्मजः ।
अपुर्वाणां च जनने शक्तो भूयश्च धर्मवित् ॥ १८ ॥

एवंवीर्यो महातेजा विश्वामित्रो महायशाः ।
तेनास्य मुनिमुख्यस्य धर्मज्ञस्य महात्मनः ॥ १९ ॥

न किंचिदप्यविदितं भूतं भव्यं च राघव ।
न रामगमने राजन् संशयं गन्तुमर्हसि ॥ २० ॥

तेषां निग्रहणे शक्तः स्वयं च कुशिकात्मजः ।
तव पुत्रहितार्थाय त्वामुपेत्याभियाचते ॥ २१ ॥

इति मुनिवचनात् प्रसन्नचित्तो
रघुवृषभश्च मुमोद भास्वराङ्गः ।
गमनमभिरुरोच राघवस्य
प्रथितयशाः कुशिकात्मजाय बुद्ध्या ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे एकविंशः सर्गः ॥

आदितः श्लोकाः 755

इत्यार्षे श्रीमद्रामायणे प्रथमेऽह्नि वर्तमानकथाप्रसङ्गः ॥

[पुरा कुशलवाभ्यां श्रीरामसन्निधावश्वमेधयज्ञवाटे द्वात्रिंशति दिनेषु गीते श्रीमद्रामायणे द्वितीयेऽह्नि बालकाण्डे द्वाविंशसर्गमारभ्य चतुश्चत्वारिंशसर्गपर्यन्तं (756—1416 श्लोकाः) गीताः तस्मिन् दिने गीताः श्लोकाः 661]

## द्वाविंशः सर्गः ॥ २२ ॥

### विश्वामित्रप्रस्थानम् ॥

तथा वसिष्ठे ब्रुवति राजा दशरथस्तदा ।
प्रहृष्टवदनो राममाजुहाव सलक्ष्मणम् ॥ १ ॥

कृतस्वस्त्ययनं मात्रा पित्रा दशरथेन च ।
पुरोधसा वसिष्ठेन मङ्गलैरभिमन्त्रितम् ॥ २ ॥

स पुत्रं मूर्ध्न्युपाघ्राय राजा दशरथः प्रियम् ।
ददौ कुशिकपुत्राय सुप्रीतेनान्तरात्मना ॥ ३ ॥

ततो वायुः सुखस्पर्शो नीरजस्को ववौ तदा ।
विश्वामित्रगतं रामं दृष्ट्वा राजीवलोचनम् ॥ ४ ॥

पुष्पवृष्टिर्महत्यासीद्देवदुन्दुभिनिस्वनः ।
शङ्खदुन्दुभिनिर्घोषः प्रयाते तु महात्मनि ॥ ५ ॥

विश्वामित्रो ययावग्रे ततो रामो महायशाः ।
काकपक्षधरो धन्वी तं च सौमित्रिरन्वगात् ॥ ६ ॥

कलापिनौ धनुष्पाणी शोभयानौ दिशो दश ।
विश्वामित्रं महात्मानं पञ्चशीर्षाविवोरगौ ॥ ७ ॥

तदा कुशिकपुत्रं तु धनुष्पाणी स्वलङ्कृतौ ।
बद्धगोधाङ्गुलित्राणौ खड्गवन्तौ महाद्युती ॥ ८ ॥

कुमारौ चारुवपुषौ भ्रातरौ रामलक्ष्मणौ ।
अनुजग्मतुरक्षुद्रौ पितामहमिवाश्विनौ ॥
स्थाणुं देवमिवाचिन्त्यं कुमाराविव पावकी ॥ ९ ॥

अध्यर्धयोजनं गत्वा सरय्वा दक्षिणे तटे ।
रामेति मधुरां वाणीं विश्वामित्रोऽभ्यभाषत ॥ १० ॥

गृहाण वत्स सलिलं मा भूत्कालविपर्ययः ।
मन्त्रग्रामं गृहाण त्वं बलामतिबलां तथा ॥ ११ ॥

न श्रमो वा ज्वरो वा ते न रूपस्य विपर्ययः ।
न च सुप्तं प्रमत्तं वा धर्षयिष्यन्ति नैर्ऋताः ॥ १२ ॥

न बाह्वोः सदृशो वीर्ये पृथिव्यामस्ति कश्चन ।
त्रिषु लोकेषु वा राम न भवेत्सदृशस्तव ॥ १३ ॥

न सौभाग्ये न दाक्षिण्ये न ज्ञाने बुद्धिनिश्चये ।
नोत्तरे प्रतिवक्तव्ये समो लोके तवानघ ॥ १४ ॥

एतद्विद्याद्वये लब्धे भविता नास्ति ते समः ।
बला चातिबला चैव सर्वज्ञानस्य मातरौ ॥ १५ ॥

क्षुत्पिपासे न ते राम भविष्येते नरोत्तम ।
बलामतिबलां चैव पठतः पथि राघव ॥ १६ ॥

अर्हणां सर्वलोकस्य प्राप्स्यसे रघुनन्दन ।
विद्याद्वयमधीयानो यशस्वी च भवेद्भुवि ॥ १७ ॥

पितामहसुते ह्येते विद्ये तेजस्समन्विते ।
प्रदातुं तव काकुत्स्थ सदृशस्त्वं हि धार्मिक ॥ १८ ॥

कामं बहुगुणाः सर्वे त्वय्येते नात्र संशयः ।
तपसा संभृते चैते बहुरूपे भविष्यतः ॥ १९ ॥

ततो रामो जलं स्पृष्ट्वा प्रहृष्टवदनः शुचिः ।
प्रतिजग्राह ते विद्ये महर्षेर्भावितात्मनः ॥ २० ॥

विद्यासमुदितो रामः शुशुभे भूरिविक्रमः ।
सहस्ररश्मिर्भगवाञ्छरदीव दिवाकरः ॥ २१ ॥

गुरुकार्याणि सर्वाणि नियुज्य कुशिकात्मजे ।
ऊषुस्तां रजनीं तत्र सरय्वां सुसुखं त्रयः ॥ २२ ॥

दशरथनृपसूनुसत्तमाभ्यां
तृणशयनेऽनुचिते सहोषिताभ्याम् ।
कुशिकसुतवचोऽनुलालिताभ्यां
सुखमिव सा विबभौ विभावरी च ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे द्वाविंशः सर्गः ॥

आदितः श्लोकाः 778

## त्रयोविंशः सर्गः ॥ २३ ॥

### कामाश्रयगमनम् ॥

प्रभातायां तु शर्वर्यां विश्वामित्रो महामुनिः ।
अभ्यभाषत काकुत्स्थं शयानं पर्णसंस्तरे ॥ १ ॥

कौसल्यासुप्रजा राम पूर्वा सन्ध्या प्रवर्तते ।
उत्तिष्ठ नरशार्दूल कर्तव्यं दैवमाह्निकम् ॥ २ ॥

महर्षेः परमोदारं वचः श्रुत्वा नरोत्तमौ ।
स्नात्वा कृतोदकौ वीरौ जेपतुः परमं जपम् ॥ ३ ॥

कृताह्निकौ महावीर्यौ विश्वामित्रं तपोधनम् ।
अभिवाद्याभिसंहृष्टौ गमनायोपतस्थतुः ॥ ४ ॥

तौ प्रयातौ महावीर्यौ पुण्यां त्रिपथगां नदीम् ।
ददृशाते ततस्तत्र सरय्वाः सङ्गमे शुभे ॥ ५ ॥

तत्राश्रमपदं पुण्यमृषीणामुग्रतेजसाम् ।
बहुवर्षसहस्राणि तप्यतां परमं तपः ॥ ६ ॥

तं दृष्ट्वा परमप्रीतौ राघवौ पुण्यमाश्रमम् ।
ऊचतुस्तं महात्मानं विश्वामित्रमिदं वचः ॥ ७ ॥

कस्यायमाश्रमः पुण्यः को न्वस्मिन् वसते पुमान् ।
भगवञ्छ्रोतुमिच्छावः परं कौतूहलं हि नौ ॥ ८ ॥

तयोस्तद्वचनं श्रुत्वा प्रहस्य मुनिपुङ्गवः ।
अब्रवीच्छ्रूयतां राम यस्यायं पूर्व आश्रमः ॥ ९ ॥

कन्दर्पो मूर्तिमानासीत् काम इत्युच्यते बुधैः ॥ १० ॥

तपस्यन्तमिह स्थाणुं नियमेन समाहितम् ।
कृतोद्वाहन्तु देवेशं गच्छन्तं समरुद्गणम् ॥
धर्षयामास दुर्मेधा हुङ्कृतश्च महात्मना ॥ ११ ॥

निर्दग्धस्तस्य रौद्रेण चक्षुषा रघुनन्दन ।
व्यशीर्यन्त शरीरात् स्वात् सर्वगात्राणि दुर्मतेः ॥ १२ ॥

तस्य गात्रं हतं तत्र निर्दग्धस्य महात्मनः ।
अशरीरः कृतः कामः क्रोधाद्देवेश्वरेण हि ॥ १३ ॥

अनङ्ग इति विख्यातस्तदाप्रभृति राघव ।
स चाङ्गविषयः श्रीमान् यत्राङ्गं स मुमोच ह ॥ १४ ॥

तस्यायमाश्रमः पुण्यस्तस्येमे मुनयः पुरा ।
शिष्या धर्मपरा वीर तेषां पापं न विद्यते ॥ १५ ॥

इहाद्य रजनीं राम वसेम शुभदर्शन ।
पुण्ययोः सरितोर्मध्ये श्वस्तरिष्यामहे वयम् ॥ १६ ॥

अभिगच्छामहे सर्वे शुचयः पुण्यमाश्रमम् ।
स्नाताश्च कृतजप्याश्च हुतहव्या नरोत्तम ॥ १७ ॥

इह वासः परो राम सुखं वत्स्यामहे वयम् ॥ १८ ॥

तेषां संवदतां तत्र तपोदीर्घेणचक्षुषा ।
विज्ञाय परमप्रीता मुनयो हर्षमागमन् ॥ १९ ॥

अर्घ्यं पाद्यं तथाऽऽतिथ्यं निवेद्य कुशिकात्मजे ।
रामलक्ष्मणयोः पश्चादकुर्वन्नतिथिक्रियां ॥ २० ॥

सत्कारं समनुप्राप्य कथाभिरभिरञ्जयन् ।
यथार्हमजपन् सन्ध्यामृषयस्ते समाहिताः ॥ २१ ॥

तत्र वासिभिरानीता मुनिभिः सुव्रतैः सह ।
न्यवसन् सुसुखं तत्र कामाश्रमपदे तदा ॥ २२ ॥

कथाभिरभिरामाभिरभिरामौ नृपात्मजौ ।
रमयामास धर्मात्मा कौशिको मुनिपुङ्गवः ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे त्रयोविंशः सर्गः ॥

आदितः श्लोकाः **801**

## चतुर्विंशः सर्गः ॥ २४ ॥

### ताटकावधगमनम् ॥

ततः प्रभाते विमले कृत्वाऽऽह्निकमरिन्दमौ ।
विश्वामित्रं पुरस्कृत्य नद्यास्तीरमुपागतौ ॥ १ ॥

ते च सर्वे महात्मानो मुनयः संशितव्रताः ।
उपस्थाप्य शुभां नावं विश्वामित्रमथाब्रुवन् ॥ २ ॥

आरोहतु भवान्नावं राजपुत्रपुरस्कृतः ।
अरिष्टं गच्छ पन्थानं मा भूत् कालविपर्ययः ॥ ३ ॥

विश्वामित्रस्तथेत्युक्त्वा तानृषीनभिपूज्य च ।
ततार सहितस्ताभ्यां सरितं सागरङ्गमाम् ॥ ४ ॥

ततः शुश्राव तं शब्दमतिसंरंभवर्धितम् ।
मध्यमागम्य तोयस्य सह रामः कनीयसा ॥ ५ ॥

अथ रामः सरिन्मध्ये पप्रच्छ मुनिपुङ्गवम् ।
वारिणो भिद्यमानस्य किमयं तुमुलो ध्वनिः ॥ ६ ॥

रामस्य वचनं श्रुत्वा कौतूहलसमन्वितम् ।
कथयामास धर्मात्मा तस्य शब्दस्य निश्चयम् ॥ ७ ॥

कैलासपर्वते राम मनसा निर्मितं सरः ।
ब्रह्मणा नरशार्दूल तेनेदं मानसं सरः ॥ ८ ॥

तस्मात् सुस्राव सरसः साऽयोध्यामुपगूहते ।
सरःप्रवृत्ता सरयूः पुण्या ब्रह्मसरश्च्युता ॥ ९ ॥

तस्यायमतुलः शब्दो जाह्नवीमभिवर्तते ।
वारिसंक्षोभजो राम प्रणामं नियतः कुरु ॥ १० ॥

ताभ्यां तु तावुभौ कृत्वा प्रणाममतिधार्मिकौ ।
तीरं दक्षिणमासाद्य जग्मतुर्लघुविक्रमौ ॥ ११ ॥

स वनं घोरसङ्काशं दृष्ट्वा नरवरात्मजः ।
अविप्रहतमैक्ष्वाकः पप्रच्छ मुनिपुङ्गवम् ॥ १२ ॥

अहो वनमिदं दुर्गं झिल्लिकागणनादितम् ।
भैरवैः श्वापदैः पूर्णं शकुन्तैर्दारुणस्वनैः ॥ १३ ॥

नानाप्रकारैः शकुनैर्वाश्यद्भिर्भैरवैः स्वनैः ।
सिंहव्याघ्रवराहैश्च वारणैश्चोपशोभितम् ॥ १४ ॥

धवाश्वकर्णखदिरैर्बिल्वतिन्दुकपाटलैः ।
सङ्कीर्णं बदरीभिश्च किमिदं दारुणं वनम् ॥ १५ ॥

तमुवाच महातेजा विश्वामित्रो महामुनिः ।
श्रूयतां वत्स काकुत्स्थ यथैतद्दारुणं वनम् ॥ १६ ॥

एतौ जनपदौ स्फीतौ पूर्वमास्तां नरोत्तम ।
मलदाश्च करूशाश्च देवनिर्माणनिर्मितौ ॥ १७ ॥

पुरा वृत्रवधे राम मलेन समभिप्लुतम् ।
क्षुधा चैव सहस्राक्षं ब्रह्महत्या यदाऽऽविशत् ॥ १८ ॥

तमिन्द्रं स्नापयन्देवा ऋषयश्च तपोधनाः ।
कलशैः स्नापयामासुर्मलश्चास्य प्रमोचयन् ॥ १९ ॥

इह भूम्यां मलं दत्वा दत्वा कारूशमेव च ।
शरीरजं महेन्द्रस्य ततो हर्षं प्रपेदिरे ॥ २० ॥

निर्मलो निष्करूशश्च शुचिरिन्द्रो यदाऽभवत् ।
ददौ देशस्य सुप्रीतो वरं प्रभुरनुत्तमम् ॥ २१ ॥

इमौ जनपदौ स्फीतौ ख्यातिं लोके गमिष्यतः ।
मलदाश्च करूशाश्च ममाङ्गमलधारिणौ ॥ २२ ॥

साधु साध्विति तं देवाः पाकशासनमब्रुवन् ।
देशस्य पूजां तां दृष्ट्वा कृतां शक्रेण धीमता ॥ २३ ॥

एतौ जनपदौ स्फीतौ दीर्घकालमरिन्दम ।
मलदाश्च करूशाश्च मुदितौ धनधान्यतः ॥ २४ ॥
कस्यचित्त्वथ कालस्य यक्षी वै कामरूपिणी ।
बलं नागसहस्रस्य धारयन्ती तदा ह्यभूत् ॥
ताटका नाम भद्रं ते भार्या सुन्दस्य धीमतः ॥ २५ ॥
मारीचो राक्षसः पुत्रो यस्याः शक्रपराक्रमः ॥ २६ ॥
वृत्तबाहुर्महाशीर्षो विपुलास्यतनुर्महान् ।
राक्षसो भैरवाकारो नित्यं त्रासयते प्रजाः ॥ २७ ॥
इमौ जनपदौ नित्यं विनाशयति राघव ।
मलदांश्च करूशांश्च ताटका दुष्टचारिणी ॥ २८ ॥
सेयं पन्थानमावार्य वसत्यध्यर्धयोजने ।
अत एव च गन्तव्यं ताटकाया वनं यतः ॥ २९ ॥
स्वबाहुबलमाश्रित्य जहीमां दुष्टचारिणीम् ।
मन्नियोगादिमं देशं कुरु निष्कण्टकं पुनः ॥ ३० ॥
न हि कश्चिदिमं देशं शक्तोऽन्यो गन्तुमीदृशम् ।
यक्षिण्या घोरया राम उत्सादितमसह्यया ॥ ३१ ॥
एतत्ते सर्वमाख्यातं यथैतद्दारुणं वनम् ।
यक्ष्या चोत्सादितं सर्वमद्यापि न निवर्तते ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे चतुर्विंशः सर्गः ॥

आदितः श्लोकाः 518

## पञ्चविंशः सर्गः ॥ २५ ॥

### ताटकावधचोदना ॥

अथ तस्याप्रमेयस्य मुनेर्वचनमुत्तमम् ।
श्रुत्वा पुरुषशार्दूलः प्रत्युवाच शुभां गिरम् ॥ १ ॥

अल्पवीर्या यदा यक्षाः श्रूयन्ते मुनिपुङ्गव ।
कथं नागसहस्रस्य धारयत्यबला बलम् ॥ २ ॥

तस्य तद्वचनं श्रुत्वा रामस्य विदितात्मनः ।
हर्षयञ्श्लक्ष्णया वाचा सलक्ष्मणमरिन्दमम् ॥ ३ ॥

विश्वामित्रोऽब्रवीद्वाक्यं शृणु येन बलोत्तरा ।
वरदानकृतं वीर्यं धारयत्यबला बलम् ॥ ४ ॥

पूर्वमासीन्महायक्षः सुकेतुर्नाम वीर्यवान् ।
अनपत्यः शुभाचारः स च तेपे महत्तपः ॥ ५ ॥

पितामहस्तु सुप्रीतस्तस्य यक्षपतेस्तदा ।
कन्यारत्नं ददौ राम ताटकां नाम नामतः ॥ ६ ॥

ददौ नागसहस्रस्य बलं चास्याः पितामहः ।
न त्वेव पुत्रं यक्षाय ददौ ब्रह्मा महायशाः ॥ ७ ॥

तां तु जातां विवर्धन्तीं रूपयौवनशालिनीम् ।
झर्झपुत्राय सुन्दाय ददौ भार्यां यशस्विनीम् ॥ ८ ॥

कस्यचित्त्वथ कालस्य यक्षी पुत्रं व्यजायत ।
मारीचं नाम दुर्धर्षं यः शापाद्राक्षसोऽभवत् ॥ ९ ॥

सुन्दे तु निहते राम साऽगस्त्यमृषिसत्तमम् ।
ताटका सह पुत्रेण प्रधर्षयितुमिच्छति ॥ १० ॥

ताडिता कामबाणौघैर्युवती सा दिगम्बरा ।
रत्यर्थं कृतसंरंभा गायन्ती साऽभ्यधावत ॥ ११ ॥

आपतन्तीं तु तां दृष्ट्वा पुनस्तस्यास्तदा भृशम् ।
क्रुद्धः कृशानुसङ्काश अगस्त्यो भगवानभूत् ॥ १२ ॥

राक्षसत्वं भजस्वेति मारीचं व्याजहार सः ॥ १३ ॥

अगस्त्यः परमक्रुद्धस्ताटकामपि शप्तवान् । ॥ १४ ॥

पुरुषादी महायक्षी विरूपा विकृतानना ।
इदं रूपमपाहाय दारुणं रूपमस्तु ते ॥ १५ ॥

सैषा शापकृतामर्षा ताटका क्रोधमूर्च्छिता ।
देशमुत्सादयत्येनमगस्त्यचरितं शुभम् ॥ १६ ॥

एनां राघव दुर्वृत्तां यक्षीं परमदारुणाम् ।
गोब्राह्मणहितार्थाय जहि दुष्टपराक्रमाम् ॥ १७ ॥

न ह्येनां शापसंसृष्टां कश्चिदुत्सहते पुमान् ।
निहन्तुं त्रिषु लोकेषु त्वामृते रघुनन्दन ॥ १८ ॥

न हि ते स्त्रीवधकृते घृणा कार्या नरोत्तम ।
चातुर्वर्ण्यहितार्थाय कर्तव्यं राजसूनुना ॥ १९ ॥

नृशंसमनृशंसं वा प्रजारक्षणकारणात् ।
पातकं वा सदोषं वा कर्तव्यं रक्षता सताम् ॥ २० ॥

राज्यभारनियुक्तानामेष धर्मः सनातनः ।
अधर्म्यां जहि काकुत्स्थ धर्मो ह्यस्या न विद्यते ॥ २१ ॥

श्रूयते हि पुरा शक्रो विरोचनसुतां नृप ।
पृथिवीं हन्तुमिच्छन्तीं मन्थरामभ्यसूदयत् ॥ २२ ॥

विष्णुना च पुरा राम भृगुपत्नी दृढव्रता ।
अनिन्द्रं लोकमिच्छन्ती काव्यमाता निषूदिता ॥ २३ ॥

एतैश्चान्यैश्च बहुभी राजपुत्र महात्मभिः ।
अधर्मसहिता नार्यो हताः पुरुषसत्तमैः ॥
तस्मादेनां घृणां त्यक्त्वा जहि मच्छासनान्नृप ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे पञ्चविंशः सर्गः ॥
आदितः श्लोकाः 857

ः सर्गः ॥ २६ ॥

ताटकावधः ॥

मुनेर्वचनमक्लीबं श्रुत्वा नरवरात्मजः ।
राघवः प्राञ्जलिर्भूत्वा प्रत्युवाच दृढव्रतः ॥ १ ॥

पितुर्वचननिर्देशात् पितुर्वचनगौरवात् ।
वचनं कौशिकस्येति कर्तव्यमविशङ्कया ॥ २ ॥

अनुशिष्टोऽस्म्ययोध्यायां गुरुमध्ये महात्मना ।
पित्रा दशरथेनाहं नावज्ञेयं च तद्वचः ॥ ३ ॥

सोऽहं पितुर्वचः श्रुत्वा शासनाद्ब्रह्मवादिनः ।
करिष्यामि न सन्देहस्ताटकावधमुत्तमम् ॥ ४ ॥

गोब्राह्मणहितार्थाय देशस्यास्य हिताय च ।
तव चैवाप्रमेयस्य वचनं कर्तुमुद्यतः ॥ ५ ॥

एवमुक्त्वा धनुर्मध्ये बद्ध्वा मुष्टिमरिन्दमः ।
ज्याघोषमकरोत्तीव्रं दिशः शब्देन पूरयन् ॥ ६ ॥

तेन शब्देन वित्रस्तास्ताटकावनवासिनः ।
ताटका च सुसङ्क्रुद्धा तेन शब्देन मोहिता ॥ ७ ॥

तं शब्दमभिनिध्याय राक्षसी क्रोधमूर्च्छिता ।
श्रुत्वा चाभ्यद्रवत् क्रुद्धा यतः शब्दो विनिःसृतः ॥ ८ ॥

तां दृष्ट्वा राघवः क्रुद्धां विकृतां विकृताननाम् ।
प्रमाणेनातिवृद्धां च लक्ष्मणं सोऽभ्यभाषत ॥ ९ ॥

पश्य लक्ष्मण यक्षिण्या भैरवं दारुणं वपुः ।
भिद्येरन्दर्शनादस्या भीरूणां हृदयानि च ॥ १० ॥

एनां पश्य दुराधर्षां मायाबलसमन्विताम् ।
विनिवृत्तां करोम्यद्य हृतकर्णाग्रनासिकाम् ॥ ११ ॥

न ह्येनामुत्सहे हन्तुं स्त्रीस्वभावेन रक्षिताम् ।
वीर्यं चास्या गतिं चापि हनिष्यामीति मे मतिः ॥

एवं ब्रुवाणे रामे तु ताटका क्रोधमूर्च्छिता ।
उद्यम्य बाहू गर्जन्ती राममेवाभ्यधावत ॥ १३ ॥

विश्वामित्रस्तु ब्रह्मर्षिर्हुङ्कारेणाभिभर्त्स्य ताम् ।
स्वस्ति राघवयोरस्तु जयं चैवाभ्यभाषत ॥ १४ ॥

उद्धून्वाना रजो घोरं ताटका राघवावुभौ ।
रजोमेघेन महता मुहूर्तं सा व्यमोहयत् ॥ १५ ॥

ततो मायां समास्थाय शिलावर्षेण राघवौ ।
अवाकिरत् सुमहता ततश्चुक्रोध राघवः ॥ १६ ॥

शिलावर्षं महत्तस्याः शरवर्षेण राघवः ।
प्रतिहत्योपधावन्त्याः करौ चिच्छेद पत्रिभिः ॥ १७ ॥

ततश्छिन्नभुजां श्रान्तामभ्याशे परिगर्जतीम् ।
सौमित्रिरकरोत् क्रोधाद्धृतकर्णाग्रनासिकाम् ॥ १८ ॥

कामरूपधरा सद्यः कृत्वा रूपाण्यनेकशः ।
अन्तर्धानं गता यक्षी मोहयन्ती च मायया ॥
अश्मवर्षं विमुञ्चन्ती भैरवं विननाद सा ॥ १९ ॥

ज्यास्वनं चक्रतुर्वीरौ वज्राशनिसमं तदा ।
मोहिता तेन शब्देन लब्धसंज्ञा चिरात्तदा ॥ २० ॥

ततस्तावश्मवर्षेन ववर्ष क्रोधमूर्च्छिता ।
पुरा नमुचितनया यथा विष्णुपुरन्दरौ ॥ २१ ॥

ततस्तावश्मवर्षेण कीर्यमाणौ समन्ततः ।
दृष्ट्वा गाधिसुतः श्रीमानिदं वचनमब्रवीत् ॥ २२ ॥

अलं ते घृणया राम पापैषा दुष्टचारिणी ।
यज्ञविघ्नकरी यक्षी पुरा वर्धेत मायया ॥ २३ ॥

वध्यतां तावदेवैषा पुरा सन्ध्या प्रवर्तते ।
रक्षांसि सन्ध्याकालेषु दुर्धर्षाणि भवन्ति हि ॥ २४ ॥

इत्युक्तस्तु तदा यक्षीमश्मवृष्ट्याऽभिवर्षतीम् ।
दर्शयञ्छब्दवेधित्वं तां रुरोध स सायकैः ॥ २५ ॥

सा रुद्धा शरजालेन मायाबलसमन्विता ।
अभिदुद्राव काकुत्स्थं लक्ष्मणं च विनेदुषी ॥ २६ ॥

तामापतन्तीं वेगेन विक्रान्तामशनीमिव ।
शरेणोरसि विव्याध सा पपात ममार च ॥ २७ ॥

तां हतां भीमसङ्काशां दृष्ट्वा सुरपतिस्तदा ।
साधु साध्विति काकुत्स्थं सुराश्च समपूजयन् ॥ २८ ॥

उवाच परमप्रीतः सहस्राक्षः पुरन्दरः ।
सुराश्च सर्वे संहृष्टा विश्वामित्रमथाब्रुवन् ॥ २९ ॥

मुने कौशिक भद्रं ते सेन्द्राः सर्वे मरुद्गणाः ।
तोषिताः कर्मणाऽनेन स्नेहं दर्शय राघवे ॥ ३० ॥

प्रजापतेर्भृशाश्वस्य पुत्रान् सत्यपराक्रमान् ।
तपोबलभृतान् ब्रह्मन् राघवाय निवेदय ॥ ३१ ॥

पात्रभूतश्च ते ब्रह्मंस्तवानुगमने धृतः ।
सुराणां च महत् कर्म कर्तव्यं राजसूनुना ॥ ३२ ॥

एवमुक्त्वा सुराः सर्वे जग्मुर्हृष्टा यथागतम् ।
विश्वामित्रं पूजयित्वा ततः सन्ध्या प्रवर्तते ॥ ३३ ॥
ततो मुनिवरः प्रीतस्ताटकावधतोषितः ।
मूर्ध्नि राममुपाघ्राय इदं वचनमब्रवीत् ॥ ३४ ॥
इहाद्य रजनीं राम वसेम शुभदर्शन ।
श्वः प्रभाते गमिष्यामस्तदाश्रमपदं मम ॥ ३५ ॥
विश्वामित्रवचः श्रुत्वा हृष्टो दशरथात्मजः ।
उवास रजनीं तत्र ताटकाया वने सुखम् ॥ ३६ ॥
मुक्तशापं वनं तच्च तस्मिन्नेव तदाऽहनि ॥ ३७ ॥
चम्पकाशोकपुन्नागमल्लिकाद्यैः सुशोभितम् ॥ ३८ ॥
चूतैश्च पनसैः पूगैर्नारिकेलैश्च शोभितम् ।
वापीकूपतटाकैश्च दीर्घिकाभिरलंकृतम् ॥ ३९ ॥
मल्लिकाहेमकूटैश्च मण्डपैरुपशोभितम् ।
रमणीयं हि बभ्राज वनं चैत्ररथं यथा ॥ ४० ॥

निहत्य तां यक्षसुतां स रामः
प्रशस्यमानः सुरसिद्धसङ्घैः ।
उवास तस्मिन् मुनिना सहैव
प्रभातवेलां प्रतिबोध्यमानः ॥ ४१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे षड्विंशः सर्गः ॥

आदितः श्लोकाः 898.

## सप्तविंशः सर्गः ॥ २७ ॥

अस्त्रोपदेशः ॥

अथ तां रजनीमुष्य विश्वामित्रो महायशाः ।
प्रशस्य राघवं वाक्यमुवाच मधुरस्वरम् ॥ १ ॥

परितुष्टोऽस्मि भद्रं ते राजपुत्र महायशः ।
प्रीत्या परमया युक्तो ददाम्यस्त्राणि सर्वशः ॥ २ ॥

देवासुरगणान्वापि सगन्धर्वोरगानपि ।
यैरमित्रान् प्रसह्याजौ वशीकृत्य जयिष्यसि ॥ ३ ॥

तानि दिव्यानि भद्रं ते ददाम्यस्त्राणि सर्वशः ।
दण्डचक्रं महद्दिव्यं दास्यामि तव राघव ॥ ४ ॥

धर्मचक्रं ततो वीर कालचक्रं तथैव च ।
विष्णुचक्रं तथाऽत्युग्रमैन्द्रमस्त्रं तथैव च ॥ ५ ॥

वज्रमस्त्रं नरश्रेष्ठ शैवं पाशुपतं तथा ।
अस्त्रं ब्रह्मशिरश्चैव ऐषीकमपि राघव ॥ ६ ॥

देवचक्रं महद्दिव्यं तव दास्यामि राघव ।
ददामि ते महाबाहो ब्राह्ममस्त्रमनुत्तमम् ॥ ७ ॥

गदे द्वे चैव काकुत्स्थ मोदकी शिखरी उभे ।
प्रदीप्ते नरशार्दूल प्रयच्छामि नृपात्मज ॥ ८ ॥

धर्मपाशं महद्राम कालपाशं तथैव च ।
वारुणं पाशमस्त्रं च ददाम्यहमनुत्तमम् ॥ ९ ॥

अशनी द्वे प्रयच्छामि शुष्कार्द्रे रघुनन्दन ।
ददामि चास्त्रं पैनाकमस्त्रं नारायणं तथा ॥ १० ॥

आग्नेयमस्त्रं दयितं शिखरं नाम नामतः ।
वायव्यं प्रथनं राम ददामि तव चानघ ॥ ११ ॥

अस्त्रं हयशिरो नाम क्रौञ्चमस्त्रं तथैव च ।
शक्तिद्वयं च काकुत्स्थ ददामि तव राघव
वधार्थं रक्षसां यानि ददाम्येतानि सर्वशः ॥ १२ ॥

कङ्कालं मुसलं घोरं कापालमथ कङ्कणम् ।
धारयन्त्यसुरा यानि ददाम्येतानि सर्वशः ॥ १३ ॥

वैद्याधरं महास्त्रं च नन्दनं नाम नामतः ।
असिरत्नं महाबाहो ददामि नृवरात्मज ॥ १४ ॥

गान्धर्वमस्त्रं दयितं मानवं नाम नामतः ।
प्रस्वापनप्रशमने दद्यां सौर्यं च राघव ॥ १५ ॥

दर्पणं शोषणं चैव सन्तापनविलापने ।
मदनं चैव दुर्धर्ष कन्दर्पदयितं तथा ॥ १६ ॥

पैशाचमस्त्रं दयितं मोहनं नाम नामतः ।
प्रतीच्छ नरशार्दूल राजपुत्र महायशः ॥ १७ ॥

तामसं नरशार्दूल सौमनं च महाबल ।
संवर्तं चैव दुर्धर्ष मौसलं च नृपात्मज ॥ १८ ॥

सत्यमस्त्रं महाबाहो तथा मायाधरं परम् ।
सौरं तेजःप्रभं नाम परतेजोऽपकर्षणम् ॥ १९ ॥
सोमास्त्रं शिशिरं नाम त्वाष्ट्रमस्त्रं सुदारुणम् ।
दारुणं च भगस्यापि शीतेषुमथ मानवम् ॥ २० ॥
एतान् राम महाबाहो कामरूपान् महाबलान् ।
गृहाण परमोदारान् क्षिप्रमेव नृपात्मज ॥ २१ ॥
स्थितस्तु प्राङ्मुखो भूत्वा शुचिर्मुनिवरस्तदा ।
ददौ रामाय सुप्रीतो मन्त्रग्राममनुत्तमाम् ॥ २२ ॥
सर्वसंग्रहणं येषां दैवतैरपि दुर्लभम् ।
तान्यस्त्राणि तदा विप्रो राघवाय न्यवेदयत् ॥ २३ ॥
जपतस्तु मुनेस्तस्य विश्वामित्रस्य धीमतः ।
उपतस्थुर्महार्हाणि सर्वाण्यस्त्राणि राघवम् ॥ २४ ॥
ऊचुश्च मुदिता रामं सर्वे प्राञ्जलयस्तदा ।
इमे स्म परमोदाराः किङ्करास्तव राघव ॥ २५ ॥
प्रतिगृह्य च काकुत्स्थः समालभ्य च पाणिना ।
मानसा मे भाविष्यध्वमिति तानभ्यचोदयत् ॥ २६ ॥
ततः प्रीतमना रामो विश्वामित्रं महामुनिम् ।
अभिवाद्य महातेजा गमनायोपचक्रमे ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे सप्तविंशः सर्गः ॥

आदितः श्लोकाः 925

## अष्टाविंशः सर्गः ॥ २८ ॥

### अस्त्रोपसंहारोपदेशः ॥

प्रतिगृह्य ततोऽस्त्राणि प्रहृष्टवदनः शुचिः ।
गच्छन्नेव च काकुत्स्थो विश्वामित्रमथाब्रवीत् ॥ १ ॥

गृहीतास्त्रोऽस्मि भगवन्दुराधर्षः सुरैरपि ।
अस्त्राणां त्वहमिच्छामि संहारं मुनिपुङ्गव ॥ २ ॥

एवं ब्रुवति काकुत्स्थे विश्वामित्रो महातपाः ।
संहारं व्याजहाराथ धृतिमान् सुव्रतः शुचिः ॥ ३ ॥

सत्यवन्तं सत्यकीर्तिं धृष्टं रभसमेव च ।
प्रतिहारतरं नाम पराङ्मुखमवाङ्मुखम् ॥ ४ ॥

लक्षाक्षविक्रमौ चैव दृढनाभसुनाभकौ ।
दशाक्षशतवक्त्रौ च दशशीर्षशतोदरौ ॥ ५ ॥

पद्मनाभमहानाभौ दुन्दुनाभसुनाभकौ ।
ज्योतिषं कृथनं चैव नैराश्यविमलावुभौ ॥ ६ ॥

योगन्धरविनिद्रौ च दैत्यप्रशमनौ तथा ।
शुचिर्बाहुर्महाबाहुर्निष्कुलिर्विरुचिस्तथा ॥
सार्चिमाली धृतिर्माली वृत्तिमान् रुचिरस्तथा ॥ ७ ॥

पितृसौमनसं चैव विधूतमकरावुभौ ।
करवीरकरं चैव धनधान्यौ च राघव ॥ ८ ॥

कामरूपं कामरुचिं मोहनं मारणं तथा ।
जृंभकं सर्वनाभं च सन्धानवरुणावुभौ ॥ ९ ॥

भृशाश्वतनयान् राम भास्वरान् कामरूपिणः ।
प्रतीच्छ मम भद्रं ते पात्रभूतोसि राघव ॥ १० ॥

बाढमित्येव काकुत्स्थः प्रहृष्टेनान्तरात्मना ॥ ११ ॥

दिव्यभास्वरदेहाश्च मूर्तिमन्तः सुखप्रदाः ।
केचिदङ्गारसदृशाः केचिद्धूमोपमास्तथा ॥ १२ ॥

चन्द्रार्कसदृशाः केचित् प्रह्वाञ्जलिपुटास्तथा ।
रामं प्राञ्जलयो भूत्वाऽब्रुवन् मधुरभाषिणः ॥
इमे स्म नरशार्दूल शाधि किं करवाम ते ॥ १३ ॥

गम्यतामिति तानाह यथेष्टं रघुनन्दनः ।
मानसाः कार्यकालेषु साहाय्यं मे करिष्यथ ॥ १४ ॥

अथ ते राममामन्त्र्य कृत्वा चापि प्रदक्षिणम् ।
एवमस्त्विति काकुत्स्थमुक्त्वा जग्मुर्यथागतम् ।
प्रणम्य शिरसा रामं सर्वे सम्मतविक्रमाः ॥ १५ ॥

ततस्तु रामः काकुत्स्थः शासनाद्ब्रह्मवादिनः ।
लक्ष्मणाय च तान् सर्वान् वरास्त्रान् रघुनन्दनः ।
संहारान् स च संहृष्टः श्रीमांस्तस्मै न्यवेदयत् ॥ १६ ॥

स च तान् राघवो ज्ञात्वा विश्वामित्रं महामुनिम् ।
गच्छन्नेवाथ मधुरं श्लक्ष्णं वचनमब्रवीत् ॥ १७ ॥

किञ्चैतन्मेघसङ्काशं पर्वतस्याविदूरतः ।
वृक्षषण्डमितो भाति परं कौतूहलं हि मे ॥ १८ ॥

दर्शनीयं मृगाकीर्णं मनोहरमतीव च ।
नानाप्रकारैः शकुनैः वल्गुभाषैरलङ्कृतम् ॥ १९ ॥
निःसृताः स्म मुनिश्रेष्ठ कान्ताराद्रोमहर्षणात् ॥ २० ॥

अनया त्ववगच्छामि देशस्य सुखवत्तया ।
सर्वं मे शंस भगवन् कस्याश्रमपदं त्विदम् ॥ २१ ॥

संप्राप्ता यत्र ते पापा ब्रह्मघ्ना दुष्टचारिणः ।
तव यज्ञस्य विघ्नाय दुरात्मानो महामुने ॥ २२ ॥

भगवंस्तत्र को देशः सा यत्र तव याज्ञिकी ।
रक्षितव्या क्रिया ब्रह्मन् मया वध्याश्च राक्षसाः ॥ २३ ॥

एतत्सर्वं मुनिश्रेष्ठ श्रोतुमिच्छाम्यहं प्रभो ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे अष्टाविंशः सर्गः ॥

आदितः श्लोकाः **949**

## एकोनत्रिंशः सर्गः ॥ २९ ॥

### सिद्धाश्रमगमनम् ॥

अथ तस्याप्रमेयस्य तद्वनं परिपृच्छतः ।
विश्वामित्रो महातेजा व्याख्यातुमुपचक्रमे ॥ १ ॥

इह राम महाबाहो विष्णुर्देववरः प्रभुः ।
अदृश्यः सर्वभूतानां सर्वात्मा सर्वलोकभृत् ॥
मोहनार्थं तु लोकस्य सर्वेषां जगतः प्रभुः ॥ २ ॥

वर्षाणि सुबहूनीह तथा युगशतानि च ।
तपश्चरणयोगार्थमुवास स महातपाः ॥ ३ ॥

एष पूर्वाश्रमो राम वामनस्य महात्मनः ।
सिद्धाश्रम इति ख्यातः सिद्धो ह्यत्र महातपाः ॥ ४ ॥

एतस्मिन्नेव काले तु राजा वैरोचनो बलिः ।
निर्जित्य दैवतगणान् सेन्द्रांश्च समरुद्गणान् ।
कारयामास तद्राज्यं त्रिषु लोकेषु विश्रुतः ॥ ५ ॥

यज्ञं चकार बलवानसुरेन्द्रो महाबलिः ॥ ६ ॥

बलेस्तु यजमानस्य देवाः साग्निपुरोगमाः ।
समागम्य स्वयं चैव विष्णुमूचुरिहाश्रमे ॥ ७ ॥

बलिर्वैरोचनो विष्णो यजते यज्ञमुत्तमम् ।
असमाप्ते क्रतौ तस्मिन् स्वकार्यमभिपद्यताम् ॥ ८ ॥

ये चैनमभिवर्तन्ते याचितार इतस्ततः ।
यच्च यत्र यथावच्च सर्वं तेभ्यः प्रयच्छति ॥ ९ ॥

स त्वं सुरहितार्थाय मायायोगमुपाश्रितः ।
वामनत्वं गतो विष्णो कुरु कल्याणमुत्तमम् ॥ १० ॥

एतस्मिन्नन्तरे राम कश्यपोऽग्निसमप्रभः ।
अदित्या सहितो राम दीप्यमान इवौजसा ॥ ११ ॥

देवीसहायो भगवान् दिव्यं वर्षसहस्रकम् ।
व्रतं समाप्य वरदं तुष्टाव मधुसूदनम् ॥ १२ ॥

तपोमयं तपोराशिं तपोमूर्तिं तपात्मकम् ।
तपसा त्वां सुतप्तेन पश्यामि पुरुषोत्तमम् ॥ १३ ॥

शरीरे तव पश्यामि जगत्सर्वमिदं प्रभो ।
त्वमनादिरनिर्देश्यस्त्वामहं शरणं गतः ॥ १४ ॥

तमुवाच हरिः प्रीतः कश्यपं धूतकल्मषम् ।
वरं वरय भद्रं ते वरार्होऽसि मतो मम ॥ १५ ॥

तच्छ्रुत्वा वचनं तस्य मारीचः कश्यपोऽब्रवीत् ॥ १६ ॥

अदित्या देवतानां च मम चैवानुयाचतः ।
वरं वरद सुप्रीतो दातुमर्हसि सुव्रत ॥ १७ ॥

पुत्रत्वं गच्छ भगवन्नदित्यां मम चानघ ।
भ्राता भव यवीयांस्त्वं शक्रस्यासुरसूदन ॥
शोकार्तानां तु देवानां साहाय्यं कर्तुमर्हसि ॥ १८ ॥

अयं सिद्धाश्रमो नाम प्रसादात्ते भविष्यति ।
सिद्धे कर्मणि देवेश उत्तिष्ठ भगवन्नितः ॥ १९ ॥

एवमुक्तो हृषीकेशः पीतवासा जनार्दनः ।
सर्वज्ञस्तत्तथेत्युक्त्वा कश्यपस्य तपस्यतः ॥ २० ॥

अथ विष्णुर्महातेजा अदित्यां समजायत ।
छत्री भिक्षुकरूपेण कमण्डलुशिखोज्ज्वलः ॥ २१ ॥

वामनं रूपमास्थाय वैरोचनमुपागमत् ॥ २२ ॥

आसाद्य यजमानं तमुवाच भगवान् हरिः ।
स्वस्ति तेऽस्तु महाराज यज्ञश्चातीव शोभते ॥ २३ ॥

वयं दानार्थिनो राजन् श्रुत्वा यज्ञमनुत्तमम् ।
त्वां दृष्ट्वा तत्र यागेषु किञ्चिल्लब्धुमिहागताः ॥ २४ ॥

वामनेनैवमुक्ते तु मुदा राजा तमब्रवीत् ।
अद्य मे सफलं जन्म अद्य मे सफलं तपः ॥ २५ ॥

अद्य मे सफलं राज्यमद्य मे सुकृतं कृतम् ।
अद्य मे सफलो यज्ञः कृतार्थः कृतवानहम् ॥ २६ ॥

त्वदर्थं कल्पितं चैव मम सर्वस्वमेव हि ।
धनौघं रत्नराशिं च भूषणं धान्यसञ्चयम् ॥ २७ ॥

ग्रामं वा नगरं वाऽपि राष्ट्रं वा यानमेव वा ।
हस्त्यश्वरथपत्तीनां संग्रहश्चान्यदेव वा ॥ २८ ॥

किमिच्छसि महाबाहो तद्ददामि तवानघ ॥ २९ ॥

एवमुक्तस्तदा राज्ञा भगवान् पुरुषोत्तमः ।
उवाचैनं स्मितं कृत्वा यजमानं महाबलिम् ॥ ३० ॥

एतैः किं मम राजेन्द्र तैस्तु नास्ति प्रयोजनम् ।
अस्मत्पादत्रयाक्रान्तां देहि भूमिं विभो मम ॥ ३१ ॥

श्रुत्वा तद्वामनेनोक्तं स्मितं कृत्वाऽसुरोत्तमः ।
येनेष्टं पूर्यते ब्रह्मन् तत् कुर्मेति ततोऽब्रवीत् ॥ ३२ ॥

वामनाय महीं दातुं निश्चितेऽसुरसत्तमे ।
तं निवार्य महाराजं प्राह शुक्रो द्विजोत्तमः ॥ ३३ ॥

विरिञ्चिभवशक्राद्या योगिनश्च सुरासुराः ।
यं न जानन्ति देवाश्च स देवो विष्णुरव्ययः ॥ ३४ ॥

दानारक्ते ततः शुक्रे शुक्रं राजपुरोहितम् ।
गृहीत्वा ताडयामास वैनतेयो महाबलः ॥ ३५ ॥

पत्न्या सह विनिश्चित्य यजमानो महाबलिः ।
मायारूपेण देवेशो मम यज्ञं गतो यदि ॥ ३६ ॥

तदैतद्यज्ञसाफल्यमेवमस्त्विति चाब्रवीत् ।
इति मत्वोदकं दत्तं वामनाय महात्मने ॥ ३७ ॥

तव पादत्रयाक्रान्तां गृहाणाद्य महीं प्रभो ।
उदके स्पृष्टमात्रे तु विश्वरूपधरो हरिः ॥
तत्रस्थ एव ववृधे येन पूर्णं जगत्त्रयम् ॥ ३८ ॥

सायुधैर्बाहुभिः पूर्णं दिग्विदिक्सर्वमेव हि ॥ ३९ ॥

तं दृष्ट्वाऽसुरराजेन्द्रो वामनत्वाच्च विस्मितः ।
माधवोऽयमिति ज्ञात्वा पूजयामास धर्मतः ॥ ४० ॥

पूजितस्तेन धर्मात्मा सर्वलोकहिताय वै ॥ ४१ ॥

त्रीन् क्रमानथ भिक्षित्वा प्रतिगृह्य च वामनः ।
आक्रम्य लोकान् लोकात्मा सर्वलोकहिते रतः ॥ ४२ ॥

महेन्द्राय पुनः प्रादान्नियम्य बलिमोजसा ।
त्रैलोक्यं स महातेजाश्चक्रे शक्रवशं पुनः ॥ ४३ ॥

तेनैष पूर्वमाक्रान्त आश्रमः श्रमनाशनः ।
मयापि भक्त्या तस्यैव वामनस्योपभुज्यते ॥ ४४ ॥

एतमाश्रममायान्ति राक्षसा विघ्नकारिणः ।
अत्र ते पुरुषव्याघ्र हन्तव्या दुष्टचारिणः ॥ ४५ ॥

अद्य गच्छामहे राम सिद्धाश्रममनुत्तमम् ।
तदाश्रमपदं तात तवाप्येतद्यथा मम ॥ ४६ ॥

इत्युक्त्वा परमप्रीतो गृह्य रामं सलक्ष्मणम् ।
प्रविशन्नाश्रमपदं व्यरोचत महामुनिः ॥
शशीव गतनीहारः पुनर्वसुसमन्वितः ॥ ४७ ॥

तं दृष्ट्वा मुनयः सर्वे सिद्धाश्रमनिवासिनः ।
उत्पत्योत्पत्य सहसा विश्वामित्रमपूजयन् ॥ ४८ ॥

यथार्हं चक्रिरे पूजां विश्वामित्राय धीमते ।
तथैव राजपुत्राभ्यामकुर्वन्नतिथिक्रियाम् ॥ ४९ ॥

मुहूर्तमथ विश्रान्तौ राजपुत्रावरिन्दमौ ।
प्राञ्जली मुनिशार्दूलमूचतू रघुनन्दनौ ॥ ५० ॥

अद्यैव दीक्षां प्रविश भद्रं ते मुनिपुङ्गव ।
सिद्धाश्रमोऽयं सिद्धः स्यात्सत्यमस्तु वचस्तव ॥ ५१ ॥

एवमुक्तो महातेजा विश्वामित्रो महामुनिः ।
प्रविवेश तदा दीक्षां नियतो नियतेन्द्रियः ॥ ५२ ॥

कुमारावपि तां रात्रिमुषित्वा सुसमाहितौ ।
प्रभातकाले चोत्थाय पूर्वां सन्ध्यामुपास्य च ॥ ५३ ॥

स्पृष्टोदकौ शुची जप्यं समाप्य नियमेन च ।
हुताग्निहोत्रमासीनं विश्वामित्रमवन्दताम् ॥ ५४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे एकोनत्रिंशः सर्गः ॥
आदितः श्लोकाः 1103

त्रिंशः सर्गः ॥ ३० ॥

यज्ञसंभरणम् ॥

अथ तौ देशकालज्ञौ राजपुत्रावरिन्दमौ ।
देशे काले च वाक्यज्ञावब्रूतां कौशिकं वचः ॥ १ ॥

भगवञ्छ्रोतुमिच्छावो यस्मिन् काले निशाचरौ ।
संरक्षणीयौ तौ ब्रह्मन्नातिवर्तेत तत्क्षणम् ॥ २ ॥

एवं ब्रुवाणौ काकुत्स्थौ त्वरमाणौ युयुत्सया ।
सर्वे ते मुनयः प्रीताः प्रशशंसुर्नृपात्मजौ ॥ ३ ॥

अद्य प्रभृति षड्रात्रं रक्षेतां राघवावुभौ ।
दीक्षां गतो ह्येष मुनिर्मौनित्वं च गमिष्यति ॥ ४ ॥

तौ तु तद्वचनं श्रुत्वा राजपुत्रौ यशस्विनौ ।
अनिद्रौ षडहोरात्रं तपोवनमरक्षताम् ॥ ५ ॥

उपासाञ्चक्रतुर्वीरौ यत्तौ परमधन्विनौ ।
ररक्षतुर्मुनिवरं विश्वामित्रमरिन्दमौ ॥ ६ ॥

अथ काले गते तस्मिन् षष्ठेऽहनि समागते ।
सौमित्रिमब्रवीद्रामो यत्तो भव समाहितः ॥ ७ ॥

रामस्यैवं ब्रुवाणस्य त्वरितस्य युयुत्सया ।
प्रजज्वाल ततो वेदिः सोपाध्यायपुरोहिता ॥ ८ ॥

सदर्भचमसस्रुक्का ससमित्कुसुमोच्चया ।
विश्वामित्रेण सहिता वेदिर्जज्वाल सर्त्विजा ॥ ९ ॥

मन्त्रवच्च यथान्यायं यज्ञोऽसौ संप्रवर्तते ।
आकाशे च महाञ्च्छब्दः प्रादुरासीद्भयानकः ॥ १० ॥

आवार्य गगनं मेघो यथा प्रावृषि निर्गतः ।
तथा मायां विकुर्वाणौ राक्षसावभ्यधावताम् ॥ ११ ॥

मारीचश्च सुबाहुश्च तयोरनुचरास्तथा ।
आगम्य भीमसङ्काशान् रुधिरौघानवासृजन् ॥ १२ ॥

सा तेन रुधिरौघेण वेदिर्जज्वाल मण्डिता ।
दृष्ट्वा वेदिं तथाभूतां राघवः क्रोधसंयुतः ।
सहसाऽभिद्रुतो रामस्तावपश्यत्ततो दिवि ॥ १३ ॥

तावापतन्तौ सहसा दृष्ट्वा राजीवलोचनः ।
लक्ष्मणं चाथ संप्रेक्ष्य रामो वचनमब्रवीत् ॥ १४ ॥

पश्य लक्ष्मण दुर्वृत्तान् राक्षसान् पिशिताशनान् ।
मानवास्त्रसमाधूताननिलेन यथा घनान् ॥ १५ ॥

मानवं परमोदारमस्त्रं परमभास्वरम् ।
चिक्षेप परमक्रुद्धो मारीचोरसि राघवः ॥ १६ ॥

स तेन परमास्त्रेण मानवेन समाहतः ।
संपूर्णं योजनशतं क्षिप्तः सागरसंप्लवे ॥ १७ ॥

विचेतनं विघूर्णन्तं शीतेषुबलताडितम् ।
निरस्तं दृश्य मारीचं रामो लक्ष्मणमब्रवीत् ॥ १८ ॥

पश्य लक्ष्मण शीतेषुं मानवं धर्मसंहितम् ।
मोहयित्वा नयत्येनं न च प्राणैर्वियुज्यते ॥ १९ ॥

इमानपि वधिष्यामि निर्घृणान्दुष्टचारिणः ।
राक्षसान् पापकर्मस्थान् यज्ञघ्नान् रुधिराशनान् ॥

इत्युक्त्वा लक्ष्मणं चाशु लाघवं दर्शयन्निव ।
संगृह्यास्त्रं ततो रामो दिव्यमाग्नेयमद्भुतम् ।
सुबाहूरसि चिक्षेप स विद्धः प्रापतद्भुवि ॥ २१ ॥

शेषान् वायव्यमादाय निजघान महायशाः ।
राघवः परमोदारो मुनीनां मुदमावहन् ॥ २२ ॥

स हत्वा राक्षसान्सर्वान् यज्ञघ्नान् रघुनन्दनः ।
ऋषिभिः पूजितस्तत्र यथेन्द्रो विजये पुरा ॥ २३ ॥
अथ यज्ञे समाप्ते तु विश्वामित्रो महामुनिः ।
निरीतिका दिशो दृष्ट्वा काकुत्स्थमिदमब्रवीत् ॥ २४ ॥
कृतार्थोऽस्मि महाबाहो कृतं गुरुवचस्त्वया ।
सिद्धाश्रममिदं सत्यं कृतं राम महायशः ॥ २५ ॥
स हि रामं प्रशस्यैवं ताभ्यां सन्ध्यामुपागमत् ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे त्रिंशः सर्गः ॥

आदितः श्लोकाः 1029

## एकत्रिंशः सर्गः ॥ ३१ ॥

### मिथिलाप्रस्थानम् ॥

अथ तां रजनीं तत्र कृतार्थौ रामलक्ष्मणौ ।
ऊषतुर्मुदितौ वीरौ प्रहृष्टेनान्तरात्मना ॥ १ ॥
प्रभातायां तु शर्वर्यां कृतपौर्वाह्णिकक्रियौ ।
विश्वामित्रमृषींश्चान्यान् सहितावभिजग्मतुः ॥ २ ॥
अभिवाद्य मुनिश्रेष्ठं ज्वलन्तमिव पावकम् ।
ऊचतुर्मधुरोदारं वाक्यं मधुरभाषिणौ ॥ ३ ॥
इमौ स्म मुनिशार्दूल किङ्करौ समुपस्थितौ ।
आज्ञापय यथेष्टं वै शासनं करवाव किं ॥ ४ ॥

एवमुक्तास्ततस्ताभ्यां सर्वे एव महर्षयः ।
विश्वामित्रं पुरस्कृत्य रामं वचनमब्रुवन् ॥ ५ ॥

मैथिलस्य नरश्रेष्ठ जनकस्य भविष्यति ।
यज्ञः परमधर्मिष्ठस्तत्र यास्यामहे वयम् ॥ ६ ॥

त्वं चैव नरशार्दूल सहास्माभिर्गमिष्यसि ।
अद्भुतं च धनूरत्नं तत्र त्वं द्रष्टुमर्हसि ॥ ७ ॥

तद्धि पूर्वं नरश्रेष्ठ दत्तं सदसि दैवतैः ।
अप्रमेयबलं घोरं मखे परमभास्वरम् ॥ ८ ॥

नास्य देवा न गन्धर्वा नासुरा न च राक्षसाः ।
कर्तुमारोपणं शक्ता न कथञ्चन मानुषाः ॥ ९ ॥

धनुषस्तस्य वीर्यं हि जिज्ञासन्तो महीक्षितः ।
न शेकुरारोपयितुं राजपुत्रा महाबलाः ॥ १० ॥

तद्धनुर्नरशार्दूल मैथिलस्य महात्मनः ।
तत्र द्रक्ष्यसि काकुत्स्थ यज्ञं चाद्भुतदर्शनम् ॥ ११ ॥

तद्धि यज्ञफलं तेन मैथिलेनोत्तमं धनुः ।
याचितं नरशार्दूल सुनाभं सर्वदैवतैः ॥ १२ ॥

आयागभूतं नृपतेस्तस्य वेश्मनि राघव ।
अर्चितं विविधैर्गन्धैर्धूपैश्चागरुगन्धिभिः ॥ १३ ॥

एवमुक्त्वा मुनिवरः प्रस्थानमकरोत्तदा ।
सर्षिसङ्घः सकाकुत्स्थ आमन्त्र्य वनदेवताः ॥ १४ ॥

स्वस्ति वोऽस्तु गमिष्यामि सिद्धः सिद्धाश्रमादहम् ।
उत्तरे जाह्नवीतीरे हिमवन्तं शिलोच्चयम् ॥ १५ ॥

प्रदक्षिणं ततः कृत्वा सिद्धाश्रममनुत्तमम् ।
उत्तरां दिशमुद्दिश्य प्रस्थातुमुपचक्रमे ॥ १६ ॥

तं व्रजन्तं मुनिवरमन्वयादनुसारिणम् ।
शकटीशतमात्रं तु प्रयाणे ब्रह्मवादिनाम् ॥ १७ ॥

मृगपक्षिगणाश्चैव सिद्धाश्रमनिवासिनः ।
अनुजग्मुर्महात्मानं विश्वामित्रं महामुनिम् ।
निवर्तयामास ततः पक्षिसङ्घान् मृगानपि ॥ १८ ॥

ते गत्वा दूरमध्वानं लम्बमाने दिवाकरे ।
वासं चक्रुर्मुनिगणाः शोणाकूले समाहिताः ॥ १९ ॥

तेऽस्तं गते दिनकरे स्नात्वा हुतहुताशनाः ।
विश्वामित्रं पुरस्कृत्य निषेदुरमितौजसः ॥ २० ॥

रामोऽपि सहसौमित्रिर्मुनींस्तानभिपूज्य च ।
अग्रतो निषसादाथ विश्वामित्रस्य धीमतः ॥ २१ ॥

अथ रामो महातेजा विश्वामित्रं महामुनिम् ।
पप्रच्छ मुनिशार्दूलं कौतूहलसमन्वितः ॥ २२ ॥

भगवन् को न्वयं देशः समृद्धवनशोभितः ।
श्रोतुमिच्छामि भद्रं ते वक्तुमर्हसि तत्त्वतः ॥ २३ ॥

चोदितो रामवाक्येन कथयामास सुव्रतः ।
तस्य देशस्य निखिलमृषिमध्ये महातपाः ॥ २४ ।

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे एकत्रिंशः सर्गः ॥
आदितः श्लोकाः 1053.

## द्वात्रिंशः सर्गः ॥ ३२ ॥

### कौशिकवंशवर्णनम् ॥

ब्रह्मयोनिर्महानासीत् कुशो नाम महातपाः ।
अक्लिष्टव्रतधर्मज्ञ सज्जनप्रतिपूजकः ॥ १ ॥

स महात्मा कुलीनायां युक्तायां रघुनन्दन ।
वैदेह्यां जनयामास चतुरस्सदृशान् सुतान् ॥
कुशाम्बं कुशनाभं च अधूर्तरजसं वसुम् ॥ २ ॥

दीप्तियुक्तान् महोत्साहान् क्षत्रधर्मचिकीर्षया ।
तानुवाच कुशः पुत्रान्धर्मिष्ठान् सत्यवादिनः ।
क्रियतां पालनं पुत्रा धर्मं प्राप्स्यथ पुष्कलम् ॥ ३ ॥

कुशस्य वचनं श्रुत्वा चत्वारो लोकसंमताः ।
निवेशांश्चक्रिरे सर्वे पुराणि नृवरास्तदा ॥ ४ ॥

कुशाम्बस्तु महातेजाः कौशाम्बीमकरोत्पुरीम् ।
कुशनाभस्तु धर्मात्मा पुरं चक्रे महोदयम् ॥ ५ ॥

अधूर्तरजसो राम धर्मारण्यं महीपतिः ।
चक्रे पुरवरं राजा वसुश्चक्रे गिरिव्रजम् ॥ ६ ॥

एषा वसुमती राम वसोस्तस्य महात्मनः ।
एते शैलवराः पञ्च प्रकाशन्ते समन्ततः ॥ ७ ॥

सुमागधी नदी राम मागधान् विश्रुताऽऽययौ ।
पञ्चानां शैलमुख्यानां मध्ये मालेव शोभते ॥ ८ ॥

सैषा हि मागधी राम वसोस्तस्य महात्मनः ।
पूर्वाभिचरिता राम सुक्षेत्रा सस्यमालिनी ॥ ९ ॥

कुशनाभस्तु राजर्षिः कन्याशतमनुत्तमम् ।
जनयामास धर्मात्मा घृताच्यां रघुनन्दन ॥ १० ॥

तास्तु यौवनशालिन्यो रूपवत्यः स्वलंकृताः ।
उद्यानभूमिमागम्य प्रावृषीव शतह्रदाः ॥ ११ ॥

गायन्त्यो नृत्यमानाश्च वादयन्त्यश्च राघव ।
आमोदं परमं जग्मुर्वराभरणभूषिताः ॥ १२ ॥

अथ ताश्चारुसर्वाङ्ग्यो रूपेणाप्रतिमा भुवि ।
उद्यानभूमिमागम्य तारा इव घनान्तरे ॥ १३ ॥

ताः सर्वगुणसंपन्ना रूपयौवनसंयुताः ।
दृष्ट्वा सर्वात्मको वायुरिदं वचनमब्रवीत् ॥ १४ ॥

अहं वः कामये सर्वा भार्या मम भविष्यथ ।
मानुषस्त्यज्यतां भावो दीर्घमायुरवाप्स्यथ ॥ १५ ॥

चलं हि यौवनं नित्यं मानुषेषु विशेषतः ।
अक्षयं यौवनं प्राप्ता अमर्यश्च भविष्यथ ॥ १६ ॥

तस्य तद्वचनं श्रुत्वा वायोरक्लिष्टकर्मणः ।
अपहास्य ततो वाक्यं कन्याशतमभाषत ॥ १७ ॥

अन्तश्चरसि भूतानां सर्वेषां त्वं सुरोत्तम ।
प्रभावज्ञास्तु ते सर्वाः किमस्मानवमन्यसे ॥ १८ ॥

कुशनाभसुताः सर्वाः समर्थास्त्वां सुरोत्तम ।
स्थानाच्च्यावयितुं देवं रक्षामस्तु तपो वयम् ॥ १९ ॥

मा भूत् स कालो दुर्मेधः पितरं सत्यवादिनम् ।
नावमन्यस्व धर्मेण स्वयं वरमुपास्महे ॥ २० ॥

पिता हि प्रभुरस्माकं दैवतं परमं हि सः ।
यस्य नो दास्यति पिता स नो भर्ता भविष्यति ॥

तासां तद्वचनं श्रुत्वा वायुः परमकोपनः ।
प्रविश्य सर्वगात्राणि बभञ्ज भगवान् प्रभुः ॥ २२ ॥

ताः कन्या वायुना भग्ना विविशुर्नृपतेर्गृहम् ।
प्रापतन् भुवि संभ्रान्ताः सलज्जाः साश्रुलोचनाः॥ २३ ॥

स च ता दयिता दीनाः कन्याः परमशोभनाः ।
दृष्ट्वा भग्नास्तदा राजा संभ्रान्त इदमब्रवीत् ॥ २४ ॥

किमिदं कथ्यतां पुत्र्यः को धर्ममवमन्यते ।
कुब्जाः केन कृताः सर्वा वेष्टन्त्यो नाभिभाषथ ॥ २५ ॥

श्रोतुमिच्छामि तं पुत्र्यः कस्येदं कर्म गर्हितम् ॥ २६ ॥

एवं राजा विनिश्वस्य समाधिं सन्दधे ततः ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे द्वात्रिंशः सर्गः ॥
आदितः श्लोकाः 1080

## त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

ब्रह्मदत्तेन कुशनाभकन्योद्वाहः ॥

तस्य तद्वचनं श्रुत्वा कुशनाभस्य धीमतः ।
शिरोभिश्चरणौ स्पृष्ट्वा कन्याशतमभाषत ॥ १ ॥

वायुः सर्वात्मको राजन् प्रधर्षयितुमिच्छति ।
अशुभं मार्गमास्थाय न धर्मं प्रत्यवेक्षते ।
सोऽस्माभिरुक्तः सर्वाभिर्वायुः कामवशं गतः ॥ २ ॥

पितृमत्यः स्म भद्रं ते स्वच्छन्दे न वयं स्थिताः ।
पितरं नो वृणीष्व त्वं यदि नो दास्यते तव ॥ ३ ॥

तेन पापानुबन्धेन वचनं न प्रतीच्छता ।
एवं ब्रुवन्त्यः सर्वाः स्मो वायुना निहता भृशम् ॥ ४ ॥

तासां तु वचनं श्रुत्वा राजा परमधार्मिकः ।
प्रत्युवाच महातेजा कन्याशतमनुत्तमम् ॥ ५ ॥

क्षान्तं क्षमावतां पुत्र्यः कर्तव्यं सुमहत् कृतम् ।
ऐकमत्यमुपागम्य कुलञ्चावेक्षितं मम ॥ ६ ॥

अलङ्कारो हि नारीणां क्षमा हि पुरुषस्य वा ॥ ७ ॥

दुष्करं तच्च वः क्षान्तं त्रिदशेषु विशेषतः ।
यादृशी वः क्षमा पुत्र्यः सर्वासामविशेषतः ॥ ८ ॥

क्षमा दानं क्षमा सत्यं क्षमा यज्ञश्च पुत्रिकाः ।
क्षमा यशः क्षमा धर्मः क्षमायां विष्ठितं जगत् ॥ ९ ॥

विसृज्य कन्याः काकुत्स्थ राजा त्रिदशविक्रमः ।
मन्त्रज्ञो मन्त्रयामास प्रदानं सह मन्त्रिभिः ।
देशे काले प्रदानस्य सदृशे प्रतिपादनम् ॥ १० ॥

एतस्मिन्नेव काले तु चूली नाम महामुनिः ।
ऊर्ध्वरेताः शुभाचारो ब्राह्मं तप उपागमत् ॥ ११ ॥

तप्यन्तं तमृषिं तत्र गन्धर्वी पर्युपासते ।
सोमदा नाम भद्रं ते ऊर्मिलातनया तदा ॥ १२ ॥

सा च तं प्रणता भूत्वा शुश्रूषणपरायणा ।
उवास काले धर्मिष्ठा तस्यास्तुष्टोऽभवद्गुरुः ॥ १३ ॥

स च तां कालयोगेन प्रोवाच रघुनन्दन ।
परितुष्टोऽस्मि भद्रं ते किं करोमि तव प्रियम् ॥ १४ ॥

परितुष्टं मुनिं ज्ञात्वा गन्धर्वी मधुरस्वरा ।
उवाच परमप्रीता वाक्यज्ञा वाक्यकोविदम् ॥ १५ ॥

लक्ष्म्या समुदितो ब्राह्म्या ब्रह्मभूतो महातपाः ।
ब्राह्मेण तपसा युक्तं पुत्रमिच्छामि धार्मिकम् ॥ १६ ॥

अपतिश्चास्मि भद्रं ते भार्या चास्मि न कस्य चित् ।
ब्राह्मणोपगतायाश्च दातुमर्हसि मे सुतम् ॥ १७ ॥

तस्याः प्रसन्नो ब्रह्मर्षिर्ददौ पुत्रमनुत्तमम् ।
ब्रह्मदत्तमिति ख्यातं मानसं चूलिनः सुतम् ॥ १८ ॥

स राजा सोमदेयस्तु पुरमध्यावसत्तदा ।
कांपिल्यां परया लक्ष्म्या देवराजो यथा दिवम् ॥

स बुद्धिं कृतवान्राजा कुशनाभः सुधार्मिकः ।
ब्रह्मदत्ताय काकुत्स्थ दातुं कन्याशतं तदा ॥ २० ॥

तमाहूय महातेजा ब्रह्मदत्तं महीपतिम् ।
ददौ कन्याशतं राजा सुप्रीतेनान्तरात्मना ॥ २१ ॥

यथाक्रमं ततः पाणीञ्जग्राह रघुनन्दन ।
ब्रह्मदत्तो महीपालस्तासां देवपतिर्यथा ॥ २२ ॥

स्पृष्टमात्रे ततः पाणौ विकुब्जा विगतज्वराः ।
युक्तं परमया लक्ष्म्या बभौ कन्याशतं तदा ॥ २३ ॥

स दृष्ट्वा वायुना मुक्ताः कुशनाभो महीपतिः ।
बभूव परमप्रीतो हर्षं लेभे पुनः पुनः ॥ २४ ॥

कृतोद्वाहं तु राजानं ब्रह्मदत्तं महीपतिम् ।
सदारं प्रेषयामास सोपाध्यायगणं तदा ॥ २५ ॥

सोमदाऽपि सुसंहृष्टा पुत्रस्य सदृशीं क्रियाम् ।
यथान्यायं च गन्धर्वी स्नुषास्ताः प्रत्यनन्दत ॥
दृष्ट्वा स्पृष्ट्वा च ताः कन्याः कुशनाभं प्रशस्य च ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे त्रयस्त्रिंशः सर्गः ॥
आदितः श्लोकाः 1106

## चतुस्त्रिंशः सर्गः ॥ ३४ ॥

### विश्वामित्रोत्पत्तिः ॥

कृतोद्वाहे गते तस्मिन् ब्रह्मदत्ते च राघव ।
अपुत्रः पुत्रलाभाय पौत्रीमिष्टिमकल्पयत् ॥ १ ॥

इष्ट्यां तु वर्तमानायां कुशनाभं महीपतिम् ।
उवाच परमोदारः कुशो ब्रह्मसुतस्तदा ॥ २ ॥

पुत्रस्ते सदृशः पुत्र भविष्यति सुधार्मिकः ।
गाधिं प्राप्स्यसि येन त्वं कीर्तिं लोके च शाश्वतीम् ॥

एवमुक्त्वा कुशो राम कुशनाभं महीपतिम् ।
जगामाकाशमाविश्य ब्रह्मलोकं सनातनम् ॥ ४ ॥

कस्यचित्त्वथ कालस्य कुशनाभस्य धीमतः ।
जज्ञे परमधर्मिष्ठो गाधिरित्येव नामतः ॥ ५ ॥

स पिता मम काकुत्स्थ गाधिः परमधार्मिकः ।
कुलवंशप्रसूतोऽस्मि कौशिको रघुनन्दन ॥ ६ ॥

पूर्वजा भगिनी चापि मम राघव सुव्रता ।
नाम्ना सत्यवती नाम ऋचीके प्रतिपादिता ॥ ७ ॥

सशरीरा गता स्वर्गं भर्तारमनुवर्तिनी ।
कौशिकी परमोदारा प्रवृत्ता च महानदी ॥ ८ ॥

दिव्या पुण्योदका रम्या हिमवन्तमुपाश्रिता ।
लोकस्य हितकामार्थं प्रवृत्ता भगिनी मम ॥ ९ ॥

ततोऽहं हिमवत्पार्श्वे वसामि निरतः सुखं ।
भगिन्यां स्नेहसंयुक्तः कौशिक्यां रघुनन्दन ॥ १० ॥

सा तु सत्यवती पुण्या सत्ये धर्मे प्रतिष्ठिता
पतिव्रता महाभागा कौशिकी सरितां वरा ॥ ११ ॥

अहं हि नियमाद्राम हित्वा तां समुपागतः ।
सिद्धाश्रममनुप्राप्य सिद्धोऽस्मि तव तेजसा ॥ १२ ॥

एषा राम ममोत्पत्तिः स्वस्य वंशस्य कीर्तिता ।
देशस्य च महाबाहो यन्मां त्वं परिपृच्छसि ॥ १३ ॥

गतोऽर्धरात्रः काकुत्स्थ कथाः कथयतो मम
निद्रामभ्येहि भद्रं ते मा भूद्विघ्नोऽध्वनीह नः ॥ १४ ॥

निष्पन्दास्तरवः सर्वे निलीना मृगपक्षिणः ।
नैशेन तमसा व्याप्ता दिशश्च रघुनन्दन ॥ १५ ॥

शनैर्वियुज्यते सन्ध्या नभो नेत्रैरिवावृतम् ।
नक्षत्रतारागहनं ज्योतिर्भिरवभासते ॥ १६ ॥

उत्तिष्ठति च शीतांशुः शशी लोकतमोनुदः ।
ह्लादयन् प्राणिनां लोके मनांसि प्रभया विभो ॥ १७ ॥

नैशानि सर्वभूतानि प्रचरन्ति ततस्ततः ।
यक्षराक्षससङ्घाश्च रौद्राश्च पिशिताशनाः ॥ १८ ॥

एवमुक्त्वा महातेजा विरराम महामुनिः ।
साधु साध्विति तं सर्वे ऋषयो ह्यभ्यपूजयन् ॥ १९ ॥

कुशिकानामयं वंशो महान्धर्मपरः सदा ।
ब्रह्मोपमा महात्मानः कुशवंश्या नरोत्तमाः ॥ २० ॥

विशेषेण भवानेव विश्वामित्रो महायशाः ।
कौशिकी च सरिच्छ्रेष्ठा कुलोद्योतकरी तव ॥ २१ ॥

इति तैर्मुनि शार्दूलैः प्रशस्तः कुशिकात्मजः ।
निद्रामुपागमच्छ्रीमानस्तङ्गत इवांशुमान् ॥ २२ ॥

रामोऽपि सहसौमित्रिः किञ्चिदागतविस्मयः ।
प्रशस्य मुनिशार्दूलं निद्रां समुपसेवते ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे चतुस्त्रिंशः सर्गः ॥

आदितः श्लोकाः 1129

## पञ्चत्रिंशः सर्गः ॥ ३५ ॥

### गङ्गोमावृत्तान्तकथनम् ॥

उपास्य रात्रिशेषं तु शोणाकूले समाहितः ।
निशायां सुप्रभातायां विश्वामित्रोऽभ्यभाषत ॥ १ ॥

सुप्रभाता निशा राम पूर्वा सन्ध्या प्रवर्तते ।
उत्तिष्ठोत्तिष्ठ भद्रं ते गमनायाभिरोचय ॥ २ ॥

तच्छ्रुत्वा वचनं तस्य कृत्वा पौर्वाह्णिकीं क्रियाम् ।
गमनं रोचयामास वाक्यं चेदमुवाच ह ॥ ३ ॥

अयं शोणः शुभजलो गाधः पुलिनमण्डितः ।
कतरेण पथा ब्रह्मन् सन्तरिष्यामहे वयम् ॥ ४ ॥

एवमुक्तस्तु रामेण विश्वामित्रोऽब्रवीदिदम् ।
एष पन्था मयोद्दिष्टो येन यान्ति महर्षयः ॥ ५ ॥

ते गत्वा दूरमध्वानं गतेऽर्धदिवसे तदा ।
जाह्नवीं सरितां श्रेष्ठां ददृशुर्मुनिसेविताम् ॥ ६ ॥

तां दृष्ट्वा पुण्यसलिलां हंससारससेविताम् ।
बभूवुर्मुनयः सर्वे मुदिताः सहराघवाः ॥
तस्यास्तीरे ततश्चक्रुस्तत्रावासपरिग्रहम् ॥ ७ ॥

ततः स्नात्वा यथान्यायं सन्तर्प्य पितृदेवताः ।
हुत्वा चैवाग्निहोत्राणि प्राश्य चामृतवद्धविः ॥ ८ ॥

विविशुर्जाह्नवीतीरे शुचौ मुदितमानसाः ।
विश्वामित्रं महात्मानं परिवार्य समन्ततः ॥ ९ ॥

संप्रहृष्टमना रामो विश्वामित्रमथाब्रवीत् ।
भगवञ्छ्रोतुमिच्छामि गङ्गां त्रिपथगां नदीम् ॥
त्रैलोक्यं कथमाक्रम्य गता नदनदीपतिम् ॥ ११ ॥

चोदितो रामवाक्येन विश्वामित्रो महामुनिः ।
वृद्धिं जन्म च गङ्गाया वक्तुमेवोपचक्रमे ॥ १२ ॥

शैलेन्द्रो हिमवान्नाम धातूनामाकरो महान् ।
तस्य कन्याद्वयं राम रूपेणाप्रतिमं भुवि ॥ १३ ॥

या मेरुदुहिता राम तयोर्माता सुमध्यमा ।
नाम्ना तु मेनका नाम पत्नी हिमवतः प्रिया ॥ १४ ॥

तस्यां गङ्गा समभवज्ज्येष्ठा हिमवतः सुता ।
उमा नाम द्वितीयाऽभून्नाम्ना तस्यैव राघव ॥ १५ ॥

अथ ज्येष्ठां सुराः सर्वे देवतार्थचिकीर्षया ।
शैलेन्द्रं वरयामासुर्गङ्गां त्रिपथगां नदीं ॥ १६ ॥

ददौ धर्मेण हिमवांस्तनयां लोकपावनीम् ।
स्वच्छन्दपथगां गङ्गां त्रैलोक्यहितकाम्यया ॥ १७ ॥

प्रतिगृह्य त्रिलोकार्थं त्रिलोकहितकारिणः ।
गङ्गामादाय तेऽगच्छन्कृतार्थेनान्तरात्मना ॥ १८ ॥

या चान्या शैलदुहिता कन्याऽऽसीद्रघुनन्दन ।
उग्रं सा व्रतमास्थाय तपस्तेपे तपोधना ॥ १९ ॥

उग्रेण तपसा युक्तां ददौ शैलवरः सुताम् ।
रुद्रायाप्रतिरूपाय उमां लोकनमस्कृताम् ॥ २० ॥

एते ते शैलराजस्य सुते लोकनमस्कृते ।
गङ्गा च सरितां श्रेष्ठा उमा देवी च राघव ॥ २१ ॥

एतत्ते सर्वमाख्यातं यथा त्रिपथगा नदी ।
खं गता प्रथमं तात गतिं गतिमतां वर ॥ २२ ॥

सैषा सुरनदी रम्या शैलेन्द्रस्य सुता तदा ।
सुरलोकं समारूढा विपापा जलवाहिनी ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे पञ्चत्रिंशः सर्गः ॥
आदितः श्लोकाः 1152

## षट्त्रिंशः सर्गः ॥ ३६ ॥

### उमामहिमानुवर्णनम् ॥

उक्तवाक्ये मुनौ तस्मिन्नुभौ राघवलक्ष्मणौ ।
अभिनन्द्य कथां वीरावूचतुर्मुनिपुङ्गवम् ॥ १ ॥

धर्मयुक्तमिदं ब्रह्मन्कथितं परमं त्वया ।
दुहितुः शैलराजस्य ज्येष्ठाया वक्तुमर्हसि ॥
विस्तरं विस्तरज्ञोऽसि दिव्यमानुषसंभवम् ॥ २ ॥

त्रीन् पथो हेतुना केन प्लावयेल्लोकपावनी ॥ ३ ॥

कथं गङ्गा त्रिपथगा विश्रुता सरिदुत्तमा ।
त्रिषु लोकेषु धर्मज्ञ कर्मभिः कैः समन्विता ॥ ४ ॥

तथा ब्रुवति काकुत्स्थे विश्वामित्रस्तपोधनः ।
निखिलेन कथां सर्वामृषिमध्ये न्यवेदयत् ॥ ५ ॥

पुरा राम कृतोद्वाहो नीलकण्ठो महातपाः ।
दृष्ट्वा च स्पृहया देवीं मैथुनायोपचक्रमे ॥ ६ ॥

नीलकण्ठस्य देवस्य दिव्यं वर्षशतं गतम् ।
न चापि तनयो राम तस्यामासीत् परन्तप ॥ ७ ॥

ततो देवाः समुद्विग्नाः पितामहपुरोगमाः ।
यदिहोत्पद्यते भूतं कस्तत् प्रतिसहिष्यते ॥ ८ ॥

अभिगम्य सुराः सर्वे प्रणिपत्येदमब्रुवन् ॥ ९ ॥

देवदेव महादेव लोकस्यास्य हिते रत ।
सुराणां प्रणिपातेन प्रसादं कर्तुमर्हसि ॥ १० ॥

न लोका धारयिष्यन्ति तव तेजः सुरोत्तम ।
ब्राह्मेण तपसा युक्तो देव्या सह तपश्चर ॥ ११ ॥

त्रैलोक्यहितकामार्थं तेजस्तेजसि धारय ।
रक्ष सर्वानिमान् लोकान्नालोकं कर्तुमर्हसि ॥ १२ ॥

देवतानां वचः श्रुत्वा सर्वलोकमहेश्वरः ।
बाढमित्यब्रवीत् सर्वान् पुनश्चेदमुवाच ह ॥ १३ ॥

धारयिष्याम्यहं तेजस्तेजस्येव सहोमया ।
त्रिदशाः पृथिवी चैव निर्वाणमधिगच्छतु ॥ १४ ॥

यदिदं क्षुभितं स्थानान्मम तेजो ह्यनुत्तमम् ।
धारयिष्यति कस्तन्मे ब्रुवन्तु सुरसत्तमाः ॥ १५ ॥

एवमुक्तास्ततो देवाः प्रत्यूचुर्वृषभध्वजम् ।
यत्तेजः क्षुभितं ह्येतत्तद्धरा धारयिष्यति ॥ १६ ॥

एवमुक्तः सुरपतिः प्रमुमोच महीतले ।
तेजसा पृथिवी येन व्याप्ता सगिरिकानना ॥ १७ ॥

ततो देवाः पुनरिदमूचुश्चाथ हुताशनम् ।
आविश त्वं महातेजो रौद्रं वायुसमन्वितः ॥ १८ ॥

तदग्निना पुनर्व्याप्तं संजातः श्वेतपर्वतः ।
दिव्यं शरवणं चैव पावकादित्यसन्निभम् ॥
यत्र जातो महातेजाः कार्तिकेयोऽग्निसंभवः ॥ १९ ॥

अथोमां च शिवं चैव देवाः सर्षिगणास्तदा ।
पूजयामासुरत्यर्थं सुप्रीतमनसस्ततः ॥ २० ॥

अथ शैलसुता राम त्रिदशानिदमब्रवीत् ।
अप्रियस्य कृतस्याद्य फलं प्राप्स्यथ मे सुराः ॥ २१ ॥

इत्युक्त्वा सलिलं गृह्य पार्वती भास्करप्रभा ।
समन्युरशपत् सर्वान् क्रोधसंरक्तलोचना ॥ २२ ॥

यस्मान्निवारिता चाहं सङ्गता पुत्रकाम्यया ।
अपत्यं स्वेषु दारेषु नोत्पादयितुमर्हथ ॥ २३ ॥

अद्यप्रभृति युष्माकमप्रजाः सन्तु पत्नयः ।
एवमुक्त्वा सुरान् सर्वाञ्च्छशाप पृथिवीमपि ॥ २४ ॥

अवने नैकरूपा त्वं बहुभार्या भविष्यसि ।
न च पुत्रकृतां प्रीतिं मत्क्रोधकलुषीकृता ॥
प्राप्स्यसि त्वं सुदुर्मेधे मम पुत्रमनिच्छती ॥ २५ ॥

तान् सर्वान् व्रीडितान्दृष्ट्वा सुरान् सुरपतिस्तदा ।
गमनायोपचक्राम दिशं वरुणपालिताम् ॥ २६ ॥

स गत्वा तप आतिष्ठत्पार्श्वे तस्योत्तरे गिरेः ।
हिमवत्प्रभवे शृङ्गे सह देव्या महेश्वरः ॥ २७ ॥

एष ते विस्तरो राम शैलपुत्र्या निवेदितः ।
गङ्गायाः प्रभवं चैव शृणु मे सहलक्ष्मणः ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे षट्त्रिंशः सर्गः ॥

आदितः श्लोकाः 1180

## सप्तत्रिंशः सर्गः ॥ ३७ ॥

### स्कन्दोत्पत्तिः ॥

तप्यमाने तपो देवे देवाः सर्षिगणाः पुरा ।
सेनापतिमभीप्सन्तः पितामहमुपागमन् ॥ १ ॥

ततोऽब्रुवन् सुराः सर्वे भगवन्तं पितामहम् ।
प्रणिपत्य सुराः सर्वे सेन्द्राः साग्निपुरोगमाः ॥ २ ॥

यो नः सेनापतिर्देव दत्तो भगवता पुरा ॥ ३ ॥

स तपः परमास्थाय तप्यते स्म सहोमया ॥ ४ ॥

यदत्रानन्तरं कार्यं लोकानां हितकाम्यया ।
संविधत्स्व विधानज्ञ त्वं हि नः परमा गतिः ॥ ५ ॥

देवतानां वचः श्रुत्वा सर्वलोकपितामहः ।
सान्त्वयन् मधुरैर्वाक्यैस्त्रिदशानिदमब्रवीत् ॥ ६ ॥

शैलपुत्र्या यदुक्तं तदप्रजाः स्वासु पत्निषु ।
तस्या वचनमक्लिष्टं सत्यमेव न संशयः ॥ ७ ॥

इयमाकाशगा गङ्गा यस्यां पुत्रं हुताशनः ।
जनयिष्यति देवानां सेनापतिमरिन्दमम् ॥ ८ ॥

ज्येष्ठा शैलेन्द्रदुहिता मानयिष्यति तं सुतम् ।
उमायास्तद्बहुमतं भविष्यति न संशयः ॥ ९ ॥

तच्छ्रुत्वा वचनं तस्य कृतार्था रघुनन्दन ।
प्रणिपत्य सुराः सर्वे पितामहमपूजयन् ॥ १० ॥

ते गत्वा पर्वतं राम कैलासं धातुमण्डितम् ।
अग्निं नियोजयामासुः पुत्रार्थं सर्वदेवताः ॥ ११ ॥

देवकार्यमिदं देव साधयस्व हुताशन ।
शैलपुत्र्यां महातेजो गङ्गायां तेज उत्सृज ॥ १२ ॥

देवतानां प्रतिज्ञाय गङ्गामभ्येत्य पावकः ।
गर्भं धारय वै देवि देवतानामिदं प्रियम् ॥ १३ ॥

इत्येतद्वचनं श्रुत्वा दिव्यं रूपमधारयत् ।
सा तस्य महिमां दृष्ट्वा समन्तादवकीर्यत ॥ १४ ॥

समन्ततस्तदा देवीमभ्यषिञ्चत पावकः ।
सर्वस्रोतांसि पूर्णानि गङ्गाया रघुनन्दन ॥ १५ ॥

तमुवाच ततो गङ्गा सर्वदेवपुरोगमम् ।
अशक्ता धारणे देव तव तेजः समुद्धतम् ।
दह्यमानाऽग्निना तेन संप्रव्यथितचेतना ॥ १६ ॥

अथाब्रवीदिदं गङ्गां पावको हिमवत्सुतां ।
इह हैमवते पादे गर्भोऽयं संनिवेश्यताम् ॥ १७ ॥

श्रुत्वाऽग्नेर्वचनं गङ्गा तं गर्भमतिभास्वरम् ।
उत्ससर्ज महातेजः स्रोतोभ्यो रघुनन्दन ॥ १८ ॥

यदस्या निर्गतं तस्मात्तप्तजाम्बूनदप्रभम् ।
काञ्चनं धरणीं प्राप्तं हिरण्यमतुलप्रभम् ॥ १९ ॥

ताम्रं कार्ष्णायसं चैव तैक्ष्ण्यादेवाभ्यजायत ।
मलं तस्याभवत्तत्र त्रपु सीसकमेव च ।
तदेतद्धरणीं प्राप्य नानाधातुरवर्धत ॥ २० ॥

निक्षिप्तमात्रे गर्भे तु तेजोभिरभिरञ्जितम् ।
सर्वं पर्वतसन्नद्धं सौवर्णमभवद्वनम् ॥ २१ ॥

तं देशं तु ततो ब्रह्मा संप्राप्यैनमभाषत ।
जातस्य रूपं यत्तस्माज्जातरूपं भविष्यति ॥ २२ ॥

जातरूपमिति ख्यातं तदाप्रभृति राघव ।
सुवर्णं पुरुषव्याघ्र हुताशनसमप्रभम् ।
तृणवृक्षलतागुल्मं सर्वं भवति काञ्चनम् ॥ २३ ॥

तं कुमारं ततो जातं सेन्द्राः साग्निमरुद्गणाः ।
क्षीरसंभावनार्थाय कृत्तिकाः समयोजयन् ॥ २४ ॥

ताः क्षीरं जातमात्रस्य कृत्वा समयमुत्तमम् ।
ददुः पुत्रोऽयमस्माकं सर्वासामिति निश्चिताः ॥ २५ ॥

ततस्तु देवताः सर्वाः कार्तिकेय इति ब्रुवन् ।
पुत्रस्त्रैलोक्यविख्यातो भविष्यति न संशयः ॥ ॥ २६ ॥

तेषां तद्वचनं श्रुत्वा स्कन्नं गर्भपरिस्रवे ।
स्नापयन् परया लक्ष्म्या दीप्यमानमिवानलम् ॥ २७ ॥

स्कन्द इत्यब्रुवन् देवास्स्कन्नं गर्भपरिस्रवात् ।
कार्तिकेयं महाभागं काकुत्स्थ ज्वलनोपमम् ॥ २८ ॥

प्रादुर्भूतं ततः क्षीरं कृत्तिकानामनुत्तमम् ।
षण्णां षडाननो भूत्वा जग्राह स्तनजं पयः ॥ २९ ॥

गृहीत्वा क्षीरमेकाह्ना सुकुमारवपुस्तदा ।
अजयत् स्वेन वीर्येण दैत्यसेनागणान् विभुः ॥ ३० ॥

सुरसेनागणपतिं ततस्तमतुलद्युतिम् ।
अभ्यषिञ्चन् सुरगणास्समेत्याग्निपुरोगमाः ॥ ३१ ॥

एष ते राम गङ्गाया विस्तरोऽभिहितो मया ।
कुमारसंभवश्चैव धन्यः पुण्यस्तथैव च ॥ ३२ ॥

य इमं शृणुयाद्राम कार्तिकेयस्य संभवम् ।
सर्वपापविनिर्मुक्तो याति ब्रह्म सनातनम् ॥ ३३ ॥

भक्तश्च यः कार्तिकेये काकुत्स्थ भुवि मानवः ।
आयुष्मान् पुत्रपौत्रैश्च स्कन्दसालोक्यमाप्नुयात् ॥ ३४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे सप्तत्रिंशः सर्गः ॥
आदितः श्लोकाः 1214

## अष्टात्रिंशः सर्गः ॥ ३८ ॥

सगराश्वमेधोपक्रमः ॥

तां कथां कौशिको रामे निवेद्य मधुराक्षराम् ।
पुनरेवापरं वाक्यं काकुत्स्थमिदमब्रवीत् ॥ १ ॥

अयोध्याधिपतिः शूरः पूर्वमासीन्नराधिपः ।
सगरो नाम धर्मात्मा प्रजाकामः स चाप्रजाः ॥ २ ॥

वैदर्भदुहिता राम केशिनी नाम नामतः ।
ज्येष्ठा सगरपत्नी सा धर्मिष्ठा सत्यवादिनी ॥ ३ ॥

अरिष्टनेमिदुहिता रूपेणाप्रतिमा भुवि ।
द्वितीया सगरस्यासीत्पत्नी सुमतिसंज्ञिता ॥ ४ ॥

ताभ्यां सह तथा राजा पत्नीभ्यां तप्तवांस्तपः ।
हिमवन्तं समाश्रित्य भृगुप्रस्रवणे गिरौ ॥ ५ ॥

अथ वर्षशते पूर्णे तपसाऽऽराधितो मुनिः ।
सगरस्य वरं प्रादाद्भृगुः सत्यपराक्रमः ॥ ६ ॥

अपत्यलाभः सुमहान् भविष्यति तवानघ ।
कीर्तिं चाप्रतिमां लोके प्राप्स्यसे पुरुषर्षभ ॥ ७ ॥

एका जनयिता तात पुत्रं वंशकरं तव ।
षष्टिं पुत्रसहस्राणि अपरा जनयिष्यति ॥ ८ ॥

भाषमाणं महात्मानं राजपुत्र्यौ प्रसाद्य तम् ।
ऊचतुः परमप्रीते कृताञ्जलिपुटे तदा ॥ ९ ॥

एकः कस्यास्सुतो ब्रह्मन् का बहून् जनयिष्यति ।
श्रोतुमिच्छावहे ब्रह्मन् सत्यमस्तु वचस्तव ॥ १० ॥

तयोस्तद्वचनं श्रुत्वा भृगुः परमधार्मिकः ।
उवाच परमां वाणीं स्वच्छन्दोऽत्र विधीयताम् ॥ ११ ॥

एको वंशकरो वाऽस्तु बहवो वा महाबलाः ।
कीर्तिमन्तो महोत्साहाः का वा कं वरमिच्छति ॥ १२ ॥

मुनेस्तद्वचनं श्रुत्वा केशिनी रघुनन्दन ।
पुत्रं वंशकरं राम जग्राह नृपसन्निधौ ॥ १३ ॥

षष्टिं पुत्रसहस्राणि सुपर्णभगिनी तदा ।
महोत्साहान् कीर्तिमतो जग्राह सुमतिः सुतान् ॥ १४ ॥

प्रदक्षिणमृषिं कृत्वा शिरसाऽभिप्रणम्य तम् ।
जगाम स्वपुरं राजा सभार्यो रघुनन्दन ॥ १५ ॥

अथ काले गते तस्मिञ्ज्येष्ठा पुत्रं व्यजायत ।
असमञ्ज इति ख्यातं केशिनी सगरात्मजम् ॥ १६ ॥

सुमतिस्तु नरव्याघ्र गर्भतुम्बं व्यजायत ।
षष्टिः पुत्रसहस्राणि तुम्बभेदाद्विनिस्सृताः ॥ १७ ॥

घृतपूर्णेषु कुम्भेषु धात्र्यस्तान् समवर्धयन् ।
कालेन महता सर्वे यौवनं प्रतिपेदिरे ॥ १८ ॥

अथ दीर्घेण कालेन रूपयौवनशालिनः ।
षष्टिः पुत्रसहस्राणि सगरस्याभवंस्तदा ॥ १९ ॥

स च ज्येष्ठो नरश्रेष्ठः सगरस्यात्मसंभवः ।
बालान् गृहीत्वा तु जले सरय्वा रघुनन्दन ।
प्रक्षिप्य प्रहसन्नित्यं मज्जतस्तान्निरीक्ष्य वै ॥ २० ॥

एवं पापसमाचारः सज्जनप्रतिबाधकः ।
पौराणामहिते युक्तः पित्रा निर्वासितः पुरात् ॥ २१ ॥

तस्य पुत्रोंऽशुमान्नाम असमञ्जस्य वीर्यवान् ।
संमतः सर्वलोकस्य सर्वस्यापि प्रियंवदः ॥ २२ ॥

ततः कालेन महता मतिः समभिजायत ।
सगरस्य नरश्रेष्ठ यजेयमिति निश्चिता ॥ २३ ॥

स कृत्वा निश्चयं राजा सोपाध्यायगणस्तदा ।
यज्ञकर्मणि वेदज्ञो यष्टुं समुपचक्रमे ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे अष्टत्रिंशः सर्गः ॥

आदितः श्लोकाः 1238

## एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

सगरपुत्रैर्यज्ञियाश्वान्वेषणम् ॥

विश्वामित्रवचः श्रुत्वा कथान्ते रघुनन्दनः ।
उवाच परमप्रीतो मुनिं दीप्तमिवानलम् ॥ १ ॥

श्रोतुमिच्छामि भद्रं ते विस्तरेण कथामिमाम् ।
पूर्वको मे कथं ब्रह्मन् यज्ञं वै समुपाहरत् ॥ २ ॥

तस्य तद्वचनं श्रुत्वा कौतूहलसमन्वितम् ।
विश्वामित्रस्तु काकुत्स्थमुवाच प्रहसन्निव ।
श्रूयतां विस्तरो राम सगरस्य महात्मनः ॥ ३ ॥

शङ्करश्वशुरो नाम हिमवानचलोत्तमः ।
इन्द्रदत्तवरः श्रीमानद्रिराजोऽभिषेचितः ।
विन्ध्यपर्वतमासाद्य निरीक्षेते परस्परं ॥ ४ ॥

तयोर्मध्ये प्रवृत्तोऽभूद्यज्ञः स पुरुषोत्तम ।
स हि देशो नरव्याघ्र प्रशस्तो यज्ञकर्मणि ॥ ५ ॥

तस्याश्वचर्यां काकुत्स्थ दृढधन्वा महारथः ।
अंशुमानकरोत्तात सगरस्य मते स्थितः ॥ ६ ॥

तस्य पर्वणि तं यज्ञं यजमानस्य वासवः ।
राक्षसीं तनुमास्थाय यार्ज्ञायाश्वमपाहरत् ॥ ७ ॥

ह्रियमाणे तुरङ्गे तु तस्मिन् यज्ञे महात्मनः ।
उपाध्यायगणाः सर्वे यजमानमथाब्रुवन् ॥ ८ ॥

अयं पर्वणि वेगेन याज्ञीयाश्वोऽपनीयते ।
हर्तारं जहि काकुत्स्थ हयश्चैवोपनीयताम् ॥ ९ ॥

यज्ञच्छिद्रं भवत्येतत्सर्वेषामशिवाय नः ।
तत्तथा क्रियतां राजन्यथाऽच्छिद्रः क्रतुर्भवेत् ॥ १० ॥

उपाध्यायवचः श्रुत्वा तस्मिन् सदसि पार्थिवः ।
षष्टिं पुत्रसहस्राणि वाक्यमेतदुवाच ह ॥ ११ ॥

गतिं पुत्रा न पश्यामि रक्षसां पुरुषर्षभाः ।
मन्त्रपूतैर्महाभागैरास्थितो हि महाक्रतुः ॥ १२ ॥

तद्गच्छत विचिन्वध्वं पुत्रका भद्रमस्तु वः ।
समुद्रमालिनीं सर्वां पृथिवीमनुगच्छत ॥ १३ ॥

एकैकं योजनं पुत्रा विस्तारमधिगच्छत ॥ १४ ॥

यावत्तुरगसंदर्शस्तावत् खनत मेदिनीम् ।
नागलोकं समासाद्य विचिन्वध्वं विशेषतः ॥ १५ ॥

दिशागजानहीन्द्रं च वैनतेयं च मातुलम् ।
आमन्त्र्य सुरलोकं वै विचिन्वध्वं विशेषतः ॥ १६ ॥

उदयाचलमारभ्य निवृत्तास्तमयं गिरिम् ।
निवर्तध्वं सतुरगा आलोक्य ब्रह्मणो गृहम् ॥
तं चैव हयहर्तारं मार्गमाणा ममाज्ञया ॥ १७ ॥

दीक्षितः पौत्रसहितस्सोपाध्यायगणो ह्यहम् ।
इह स्थास्यामि भद्रं वो यावत्तुरगदर्शनम् ॥ १८ ॥

इत्युक्त्वा हृष्टमनसो राजपुत्रा महाबलाः ।
प्रणम्य शिरसा तस्मै कृत्वा चापि प्रदक्षिणम् ॥
जग्मुर्महीतलं राम पितुर्वचनयन्त्रिताः ॥ १९ ॥

योजनायामविस्तारमेकैको धरणीतलम् ।
विभिदुः पुरुषव्याघ्र वज्रस्पर्शसमैर्भुजैः ॥ २० ॥

शूलैरशनिकल्पैश्च हलैश्चापि सुदारुणैः ।
भिद्यमाना वसुमती ननाद रघुनन्दन ॥ २१ ॥

नागानां वध्यमानानामसुराणां च राघव ।
राक्षसानां च दुर्धर्षः सत्त्वानां निनदोऽभवत् ॥ २२ ॥

योजनानां सहस्राणि षष्टिं तु रघुनन्दन ।
बिभिदुर्धरणीं वीरा रसातलमनुत्तमम् ॥ २३ ॥

एवं पर्वतसंबाधं जम्बूद्वीपं नृपात्मजाः ।
खनन्तो नरशार्दूल सर्वतः परिचक्रमुः ॥ २४ ॥

ततो देवाः सगन्धर्वाः सासुरास्सहपन्नगाः ।
सम्भ्रान्तमनसः सर्वे पितामहमुपागमन् ॥ २५ ॥

ते प्रसाद्य महात्मानं विषण्णवदनास्तदा ।
ऊचुः परमसंत्रस्ताः पितामहमिदं वचः ॥ २६ ॥

भगवन् पृथिवी सर्वा खन्यते सगरात्मजैः ।
बहवश्च महात्मानो वध्यन्ते तलवासिनः ॥ २७ ॥

अयं यज्ञहरोऽस्माकमनेनाश्वोऽपनीयते ।
इति ते सर्वभूतानि हिंसन्ति सगरात्मजाः ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे एकोनचत्वारिंशः सर्गः ॥

आदितः श्लोकाः 1267.

## चत्वारिंशः सर्गः ॥ ४० ॥

### सगरपुत्राणां भस्मीभावः ॥

देवतानां वचः श्रुत्वा भगवान् वै पितामहः ।
प्रत्युवाच सुसन्त्रस्तान् कृतान्तबलमोहितान् ॥ १ ॥

यस्येयं वसुधा कृत्स्ना वासुदेवस्य धीमतः ।
महिषी माधवस्यैषा स एव भगवान् प्रभुः ॥ २ ॥

कापिलं रूपमास्थाय धारयत्यनिशं धराम् ।
तस्य कोपाग्निना दग्धा भविष्यन्ति नृपात्मजाः ॥ ३ ॥

पृथिव्याश्चापि निर्भेदो दृष्ट एव सनातनः ।
सगरस्य च पुत्राणां विनाशोऽदीर्घजीविनाम् ॥ ४ ॥

पितामहवचः श्रुत्वा त्रयस्त्रिंशदरिंदम ।
देवाः परमसंहृष्टाः पुनर्जग्मुर्यथागतम् ॥ ५ ॥

सगरस्य च पुत्राणां प्रादुरासीन्महात्मनाम् ।
पृथिव्यां भिद्यमानायां निर्घातसमनिःस्वनः ॥ ६ ॥

ततो भित्त्वा महीं सर्वां कृत्वा चापि प्रदक्षिणम् ।
सहिताः सागराः सर्वे पितरं वाक्यमब्रुवन् ॥ ७ ॥

परिक्रान्ता मही सर्वा सत्त्ववन्तश्च सूदिताः ।
देवदानवरक्षांसि पिशाचोरगपन्नगाः ॥ ८ ॥

न च पश्यामहेऽश्वं तमश्वहर्तारमेव च ।
किं करिष्याम भद्रं ते बुद्धिरत्र विचार्यताम् ॥ ९ ॥

तेषां तद्वचनं श्रुत्वा पुत्राणां राजसत्तमः ।
समन्युरब्रवीद्वाक्यं सगरो रघुनन्दन ॥ १० ॥

भूयः खनत भद्रं वो निर्भिद्य वसुधातलम् ।
अश्वहर्तारमासाद्य कृतार्थाश्च निवर्तथ ॥ ११ ॥

पितुर्वचनमास्थाय सगरस्य महात्मनः ।
षष्टिः पुत्रसहस्राणि रसातलमभिद्रवन् ॥ १२ ॥

खन्यमाने ततस्तस्मिन्ददृशुः पर्वतोपमम् ।
दिशागजं विरूपाक्षं धारयन्तं महीतलम् ॥ १३ ॥

सपर्वतवनां कृत्स्नां पृथिवीं रघुनन्दन ।
धारयामास शिरसा विरूपाक्षो महागजः ॥ १४ ॥

यदा पर्वणि काकुत्स्थ विश्रमार्थं महागजः ।
खेदाच्चालयते शीर्षं भूमिकम्पस्तदा भवेत् ॥ १५ ॥

तं ते प्रदक्षिणं कृत्वा दिशापालं महागजम् ।
मानयन्तो हि ते राम जग्मुर्भित्त्वा रसातलम् ॥ १६ ॥

ततः पूर्वां दिशं भित्त्वा दक्षिणां बिभिदुः पुनः ।
दक्षिणस्यामपि दिशि ददृशुस्ते महागजम् ॥ १७ ॥

महापद्मं महात्मानं सुमहत्पर्वतोपमम् ।
शिरसा धारयन्तं ते विस्मयं जग्मुरुत्तमम् ॥ १८ ॥

ततः प्रदक्षिणं कृत्वा सगरस्य महात्मनः ।
षष्टिः पुत्रसहस्राणि पश्चिमां बिभिदुर्दिशम् ॥ १९ ॥

पश्चिमायामपि दिशि महान्तमचलोपमम् ।
दिशागजं सौमनसं ददृशुस्ते महाबलाः ॥ २० ॥

तं ते प्रदक्षिणं कृत्वा पृष्ट्वा चापि निरामयम् ।
खनितुं समुपाक्रान्ता दिशं सोमवतीं ततः ॥ २१ ॥

उत्तरस्यामपि दिशि ददृशुर्हिमपाण्डुरम् ।
भद्रं भद्रेण वपुषा धारयन्तं महीमिमाम् ॥ २२ ॥

समालभ्य च तं सर्वे कृत्वा चापि प्रदक्षिणम् ।
षष्टिः पुत्रसहस्राणि बिभिदुर्वसुधातलम् ॥ २३ ॥

ततः प्रागुत्तरां गत्वा सागराः प्रथितां दिशम् ।
रोषादभ्यखनन्सर्वे पृथिवीं सगरात्मजाः ॥ २४ ॥

ते तु सर्वे महात्मानो भीमवेगा महाबलाः ।
ददृशुः कपिलं तत्र वासुदेवं सनातनम् ॥ २५ ॥

हयं च तस्य देवस्य चरन्तमविदूरतः ।
प्रहर्षमतुलं प्राप्ताः सर्वे ते रघुनन्दन ॥ २६ ॥

ते तं हयहरं ज्ञात्वा क्रोधपर्याकुलेक्षणाः ।
खनित्रलाङ्गलधरा नानावृक्षशिलाधराः ॥
अभ्यधावन्त संक्रुद्धास्तिष्ठ तिष्ठेति चाब्रुवन् ॥ २७ ॥

अस्माकं त्वं हि तुरगं याज्ञीयं हृतवानसि ।
दुर्मेधस्त्वं हि संप्राप्तान् विद्धि नः सगरात्मजान् ॥ २८ ॥

श्रुत्वा तद्वचनं तेषां कपिलो रघुनन्दन ।
रोषेण महताऽऽविष्टो हुङ्कारमकरोत्तदा ॥ २९ ॥

ततस्तेनाप्रमेयेन कपिलेन महात्मना ।
भस्मराशीकृताः सर्वे काकुत्स्थ सगरात्मजाः ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे चत्वारिंशः सर्गः ॥

आदितः श्लोकाः 1297.

## एकचत्वारिंशः सर्गः ॥ ४१ ॥

### सगरयज्ञसमाप्तिः ॥

पुत्रांश्चिरगतान् ज्ञात्वा सगरो रघुनन्दन ।
नप्तारमब्रवीद्राजा दीप्यमानं स्वतेजसा ॥ १ ॥

शूरश्च कृतविद्यश्च पूर्वैस्तुल्योऽसि तेजसा ।
पितॄणां गतिमन्विच्छ येन चाश्वोऽपवाहितः ॥ २ ॥

अन्तर्भौमानि भूतानि वीर्यवन्ति महान्ति च ।
तेषां त्वं प्रतिघातार्थं सासिं गृह्णीष्व कार्मुकम् ॥ ३ ॥

अभिवाद्याभिवाद्यांस्त्वं हत्वा विघ्नकरानपि ।
सिद्धार्थस्सन्निवर्तस्व मम यज्ञस्य पारगः ॥ ४ ॥

एवमुक्तोंशुमान् सम्यक् सगरेण महात्मना ।
धनुरादाय खड्गं च जगाम लघुविक्रमः ॥ ५ ॥

स खातं पितृभिर्मार्गमन्तर्भौमं महात्मभिः ।
प्रापद्यत नरश्रेष्ठस्तेन राज्ञाऽभिचोदितः ॥ ६ ॥

दैत्यदानवरक्षोभिः पिशाचपतगोरगैः ।
पूज्यमानो महातेजा दिशागजमपश्यत ॥ ७ ॥

स तं प्रदक्षिणं कृत्वा पृष्ट्वा चैव निरामयम् ।
पितॄन् स परिपप्रच्छ वाजिहर्तारमेव च ॥ ८ ॥

दिशागजस्तु तच्छ्रुत्वा प्रीत्याऽऽहांशुमतो वचः ।
आसमञ्ज कृतार्थस्त्वं सहाश्वः शीघ्रमेष्यसि ॥ ९ ॥

तस्य तद्वचनं श्रुत्वा सर्वानेव दिशागजान् ।
यथाक्रमं यथान्यायं प्रष्टुं समुपचक्रमे ॥ १० ॥

तैश्च सर्वैर्दिशापालैर्वाक्यज्ञैर्वाक्यकोविदैः ।
पूजितः सहयश्चैव गन्ताऽसीत्यभिचोदितः ॥ ११ ॥

तेषां तद्वचनं श्रुत्वा जगाम लघुविक्रमः ।
भस्मराशीकृता यत्र पितरस्तत्र सागराः ॥ १२ ॥

स दुःखवशमापन्नस्त्वसमञ्जसुतस्तदा ।
चुक्रोश परमार्तस्तु वधात्तेषां सुदुःखितः ॥ १३ ॥

याज्ञीयं च हयं तत्र चरन्तमविदूरतः ।
ददर्श पुरुषव्याघ्रो दुःखशोकसमन्वितः ॥ १४ ॥

स तेषां राजपुत्राणां कर्तुकामो जलक्रियाम् ।
सलिलार्थी महातेजा न चापश्यज्जलाशयम् ॥ १५ ॥

विसार्य निपुणां दृष्टिं ततोऽपश्यत् खगाधिपम् ।
पितॄणां मातुलं राम सुपर्णमनिलोपमम् ॥ १६ ॥

स चैनमब्रवीद्वाक्यं वैनतेयो महाबलः ।
मा शुचः पुरुषव्याघ्र वधोऽयं लोकसंमतः ॥ १७ ॥

कपिलेनाप्रमेयेन दग्धा हीमे महाबलाः ।
सलिलं नार्हसि प्राज्ञ दातुमेषां हि लौकिकम् ॥ १८ ॥

गङ्गा हिमवतो ज्येष्ठा दुहिता पुरुषर्षभ ।
तस्यां कुरु महाभाग पितॄणां तु जलक्रियाम् ॥ १९ ॥

भस्मराशीकृतानेतान् प्लावयेल्लोकपावनी ।
तया क्लिन्नमिदं भस्म गङ्गया लोककान्तया ॥ २० ॥

षष्टिं पुत्रसहस्राणि स्वर्गलोकं नयिष्यति ॥ २१ ॥

गङ्गामानय भद्रं ते देवलोकान्महीतलम् ।
क्रियतां यदि शक्तोऽसि गङ्गाया अवतारणम् ॥ २२ ॥

गच्छ चाश्वं महाभाग संगृह्य पुरुषर्षभ ।
यज्ञं पैतामहं वीर निर्वर्तयितुमर्हसि ॥ २३ ॥

सुपर्णवचनं श्रुत्वा सोंऽशुमानतिवीर्यवान् ।
त्वरितं हयमादाय पुनरायान्महायशाः ॥ २४ ॥

ततो राजानमासाद्य दीक्षितं रघुनन्दन ।
न्यवेदयद्यथावृत्तं सुपर्णवचनं यथा ॥ २५ ॥

तच्छ्रुत्वा घोरसङ्काशं वाक्यमंशुमतो नृपः ।
यज्ञं निर्वर्तयामास यथातत्त्वं यथाविधि ॥ २६ ॥

स्वपुरं चागमच्छ्रीमानिष्टयज्ञो महीपतिः ।
गङ्गायाश्चागमे राजा निश्चयं नाभ्यगच्छत ॥ २७ ॥

अगत्वा निश्चयं राजा कालेन महता महान् ।
त्रिंशद्वर्षसहस्राणि राज्यं कृत्वा दिवं गतः ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे एकचत्वारिंशः सर्गः ॥

आदितः श्लोकाः 1325

## द्विचत्वारिंशः सर्गः ॥ ४२ ॥

गङ्गावतरणे भगीरथप्रयत्नः ॥

कालधर्मं गते राम सगरे प्रकृतीजनाः ।
राजानं रोचयामासुरंशुमन्तं सुधार्मिकम् ॥ १ ॥

स राजा सुमहानासीदंशुमान् रघुनन्दन ।
तस्य पुत्रो महानासीद्दिलीप इति विश्रुतः ॥ २ ॥

तस्मिन् राज्यं समावेश्य दिलीपे रघुनन्दन ।
हिमवच्छिखरे रम्ये तपस्तेपे सुदारुणम् ॥ ३ ॥

द्वात्रिंशच्च सहस्राणि वर्षाणि सुमहायशाः ।
तपोवनगतो राजा स्वर्गं लेभे तपोधनः ॥ ४ ॥

दिलीपस्तु महातेजाः श्रुत्वा पैतामहं वधम् ।
दुःखोपहतया बुद्ध्या निश्चयं नाधिगच्छति ॥ ५ ॥

कथं गङ्गावतरणं कथं तेषां जलक्रिया ।
तारयेयं कथं चैनानिति चिन्तापरोऽभवत् ॥ ६ ॥

तस्य चिन्तयतो नित्यं धर्मेण विदितात्मनः ।
पुत्रो भगीरथो नाम जज्ञे परमधार्मिकः ॥ ७ ॥

दिलीपस्तु महातेजा यज्ञैर्बहुभिरिष्टवान् ।
त्रिंशद्वर्षसहस्राणि राजा राज्यमकारयत् ॥ ८ ॥

अगत्वा निश्चयं राजा तेषामुद्धरणं प्रति ।
व्याधिना नरशार्दूल कालधर्ममुपेयिवान् ॥ ९ ॥

इन्द्रलोकं गतो राजा स्वार्जितेनैव कर्मणा ।
राज्ये भगीरथं पुत्रमभ्यषिञ्चन्नरर्षभम् ॥ १० ॥

भगीरथस्तु राजर्षिर्धार्मिको रघुनन्दन ।
अनपत्यो महातेजाः प्रजाकामः स चाप्रजः ॥
मन्त्रिष्वाधाय तद्राज्यं गङ्गावतरणे रतः ॥ ११ ॥

स तपो दीर्घमातिष्ठद्गोकर्णे रघुनन्दन ।
ऊर्ध्वबाहुः पञ्चतपा मासाहारो जितेन्द्रियः ॥ १२ ॥

तस्य वर्षसहस्राणि घोरे तपसि तिष्ठतः ।
अतीतानि महाबाहो तस्य राज्ञो महात्मनः ॥ १३ ॥

सुप्रीतो भगवान् ब्रह्मा प्रजानां प्रभुरीश्वरः ॥ १४ ॥

ततः सुरगणैः सार्धमुपागम्य पितामहः ।
भगीरथं महात्मानं तप्यमानमथाब्रवीत् ॥ १५ ॥

भगीरथ महातेजः प्रीतस्तेऽहं जनेश्वर ।
तपसा च सुतप्तेन वरं वरय सुव्रत ॥ १६ ॥

तमुवाच महातेजाः सर्वलोकपितामहम् ।
भगीरथो महाभागः कृताञ्जलिरुपस्थितः ॥ १७ ॥

यदि मे भगवन् प्रीतो यद्यस्ति तपसः फलम् ।
सगरस्यात्मजाः सर्वे मत्तः सलिलमाप्नुयुः ॥ १८ ॥

गङ्गायाः सलिलक्लिन्ने भस्मन्येषां महात्मनाम् ।
स्वर्गं गच्छेयुरत्यन्तं सर्वे मे प्रपितामहाः ॥ १९ ॥

देया च सन्ततिर्देव नावसीदेत् कुलं च नः ।
इक्ष्वाकूणां कुले देव एष मेऽस्तु वरः परः ॥ २० ॥

उक्तवाक्यं तु राजानं सर्वलोकपितामहः ।
प्रत्युवाच शुभां वाणीं मधुरां मधुराक्षराम् ॥ २१ ॥

तपोधन महाभाग भगीरथ महारथ ।
एवं भवतु भद्रं ते इक्ष्वाकुकुलवर्धन ॥ २२ ॥

इयं हैमवती गङ्गा ज्येष्ठा हिमवतः सुता ।
तां वै धारयितुं राजन् हरस्तत्र नियुज्यताम् ॥ २३ ॥

गङ्गायाः पतनं राजन् पृथिवी न सहिष्यति ।
तां वै धारयितुं वीर नान्यं पश्यामि शूलिनः ॥ २४ ॥

तमेवमुक्त्वा राजानं गङ्गां चाभाष्य लोककृत् ।
जगाम त्रिदिवं देवः सह सर्वैर्मरुद्गणैः ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे द्विचत्वारिंशः सर्गः ॥

आदितः श्लोकाः 1350

## त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

### गङ्गावतरणम् ॥

देवदेवे गते तस्मिन् सोऽङ्गुष्ठाग्रनिपीडिताम् ।
कृत्वा वसुमतीं राम संवत्सरमुपासत ॥ १ ॥

ऊर्ध्वबाहुर्निरालंबो वायुभक्षो निराश्रयः ।
अचलः स्थाणुवत् स्थित्वा रात्रिंदिवमतन्द्रितः ॥ २ ॥

अथ संवत्सरे पूर्णे सर्वलोकनमस्कृतः ।
उमापतिः पशुपती राजानमिदमब्रवीत् ॥ ३ ॥

प्रीतस्तेऽहं नरश्रेष्ठ करिष्यामि तव प्रियम् ।
शिरसा धारयिष्यामि शैलराजसुतामहम् ॥ ४ ॥

ततो हैमवती ज्येष्ठा सर्वलोकनमस्कृता ।
तदा सा तु महद्रूपं कृत्वा वेगं च दुस्सहम् ॥
आकाशादपतद्गङ्गा शिवे शिवशिरस्युत ॥ ५ ॥

अचिन्तयच्च सा देवी गङ्गा परमदुर्धरा ।
विशाम्यहं हि पातालं स्रोतसा गृह्य शङ्करम् ॥ ६ ॥

तस्यावलेपनं ज्ञात्वा क्रुद्धस्तु भगवान् हरः ।
तिरोभावयितुं बुद्धिं चक्रे त्रिणयनस्तदा ॥ ७ ॥

सा तस्मिन् पतिता पुण्या पुण्ये रुद्रस्य मूर्धनि ।
हिमवत्प्रतिमे राम जटामण्डलगह्वरे ॥ ८ ॥

सा कथंचिन्महीं गन्तुं नाशक्नोद्यत्नमास्थिता ।
नैव सा निर्गमं लेभे जटामण्डलमोहिता ॥ ९ ॥

तत्रैवाबभ्रमद्देवी संवत्सरगणान् बहून् ।
तामपश्यन् पुनस्तत्र तपः परममास्थितः ॥ १० ॥

स तेन तोषितश्चासीदत्यर्थं रघुनन्दन ।
विससर्ज ततो गङ्गां हरो बिन्दुसरः प्रति ॥ ११ ॥

तस्यां विसृज्यमानायां सप्त स्रोतांसि जज्ञिरे ॥ १२ ॥

ह्लादिनी पावनी चैव नलिनी च तथाऽपरा ।
तिस्रः प्राचीं दिशं जग्मुर्गङ्गाश्शिवजलाश्शुभाः ॥ १३ ॥

सुचक्षुश्चैव सीता च सिन्धुश्चैव महानदी ।
तिस्रस्त्वेता दिशं जग्मुः प्रतीचीं तु शुभोदकाः ॥ १४ ॥

सप्तमी चान्वगात्तासां भगीरथमथो नृपम् ॥ १५ ॥

भगीरथोऽपि राजर्षिर्दिव्यं स्यन्दनमास्थितः ।
प्रायादग्रे महातेजा गङ्गा तं चाप्यनुव्रजत् ॥ १६ ॥

गगनाच्छङ्करशिरस्ततो धरणिमास्थिता ।
व्यसर्पत जलं तत्र तीव्रशब्दपुरस्कृतम् ॥ १७ ॥

मत्स्यकच्छपसङ्घैश्च शिंशुमारगणैस्तथा ।
पतद्भिः पतितैश्चान्यैर्व्यरोचत वसुन्धरा ॥ १८ ॥

ततो देवर्षिगन्धर्वा यक्षसिद्धगणास्तथा ।
व्यलोकयन्त तां तत्र गगनाद्गां गतां तदा ॥ १९ ॥

विमानैर्नगराकारैर्हयैर्गजवरैस्तथा ।
पारिप्लवगतैश्चापि देवतास्तत्र विष्ठिताः ॥ २० ॥

तदद्भुततमं लोके गङ्गापतनमुत्तमम् ।
दिदृक्षवो देवगणाः समेयुरमितौजसः ॥ २१ ॥

संपतद्भिः सुरगणैस्तेषां चाभरणौजसा ।
शतादित्यमिवाभाति गगनं गततोयदम् ॥ २२ ॥

शिंशुमारोरगगणैर्मीनैरपि च चञ्चलैः ।
विद्युद्भिरिव नक्षत्रैराकाशमभवत्तदा ॥ २३ ॥

पाण्डुरैः सलिलोत्पीडैः कीर्यमाणैः समन्ततः ।
शारदाभ्रैरिवाकीर्णं गगनं हंससंप्लवैः ॥ २४ ॥

क्वचिद्द्रुततरं याति कुटिलं क्वचिदायतम् ।
विततं क्वचिदुद्भूतं क्वचिद्याति शनैः शनैः ॥ २५ ॥

सलिलेनैव सलिलं क्वचिदभ्याहतं पुनः ।
मुहुरूर्ध्वपथं गत्वा पपात वसुधां पुनः ॥ २६ ॥

विष्णुपादात् परिभ्रष्टं प्लावयित्वेन्दुमण्डलम् ।
तच्छङ्करशिरोभ्रष्टं भ्रष्टं भूमितले पुनः ॥
व्यरोचत तदा तोयं निर्मलं गतकल्मषम् ॥ २७ ॥

तत्र देवर्षिगन्धर्वा वसुधातलवासिनः ।
भवाङ्गपतितं तोयं पवित्रमिति पस्पृशुः ॥ २८ ॥

शापात् प्रपतिता ये च गगनाद्वसुधातलं ।
कृत्वा तत्राभिषेकं ते बभूवुर्गतकल्मषाः ॥ २९ ॥

धूतपापाः पुनस्तेन तोयेनाथ सुभास्वता ।
पुनराकाशमाविश्य स्वान् लोकान् प्रतिपेदिरे ॥ ३० ॥

मुमुदे मुदितो लोकस्तेन तोयेन भास्वता ।
कृताभिषेको गङ्गायां बभूव विगतक्लमः ॥ ३१ ॥

भगीरथोऽपि राजर्षिर्दिव्यं स्यन्दनमास्थितः ।
प्रायादग्रे महातेजास्तं गङ्गा पृष्ठतोऽन्वगात् ॥ ३२ ॥

देवाः सर्षिगणाः सर्वे दैत्यदानवराक्षसाः ।
गन्धर्वयक्षप्रवराः सकिन्नरमहोरगाः ॥ ३३ ॥

सर्वाश्चाप्सरसो राम भगीरथरथानुगाः ।
गङ्गामन्वगमन् प्रीताः सर्वे जलचराश्च ये ॥ ३४ ॥

यतो भगीरथो राजा ततो गङ्गा यशस्विनी ।
जगाम सरितां श्रेष्ठा सर्वपापप्रणाशिनी ॥ ३५ ॥

त्वं मे नाथो ह्यनाथस्य भव भव्येन चेतसा ।
पितेव पुत्रं धर्मात्मंस्त्रातुमर्हसि किल्बिषात् ॥ ७ ॥

तस्य तद्वचनं श्रुत्वा विश्वामित्रो महातपाः ।
सान्त्वयित्वा बहुविधं पुत्रानिदमुवाच ह ॥ ८ ॥

यत्कृते पितरः पुत्राञ्जनयन्ति शुभार्थिनः ।
परलोकहितार्थाय तस्य कालोऽयमागतः ॥ ९ ॥

अयं मुनिसुतो बालो मत्तः शरणमिच्छति ।
अस्य जीवितमात्रेण प्रियं कुरुत पुत्रकाः ॥ १० ॥

सर्वे सुकृतकर्माणः सर्वे धर्मपरायणाः ।
पशुभूता नरेन्द्रस्य तृप्तिमग्नेः प्रयच्छथ ॥ ११ ॥

नाथवांश्च शुनःशेपो यज्ञश्चाविघ्नितो भवेत् ।
देवतास्तर्पिताश्च स्युर्मम चापि कृतं वचः ॥ १२ ॥

मुनेस्तु वचनं श्रुत्वा मधुष्यन्दादयः सुताः ।
साभिमानं नरश्रेष्ठ सलीलमिदमब्रुवन् ॥ १३ ॥

कथमात्मसुतान्हित्वा त्रायसेऽन्यसुतं विभो ।
अकार्यमिव पश्यामः श्वमांसमिव भोजने ॥ १४ ॥

तेषां तद्वचनं श्रुत्वा पुत्राणां मुनिपुङ्गवः ।
क्रोधसंरक्तनयनो व्याहर्तुमुपचक्रमे ॥ १५ ॥

निःसाध्वसमिदं प्रोक्तं धर्मादपि विगर्हितम् ।
अतिक्रम्य तु मद्वाक्यं दारुणं रोमहर्षणम् ॥ १६ ॥

श्वमांसभोजिनः सर्वे वासिष्ठा इव जातिषु ।
पूर्णं वर्षसहस्रं तु पृथिव्यामनुवत्स्यथ ॥ १७ ॥

कृत्वा शापसमायुक्तान्पुत्रान्मुनिवरस्तथा ।
शुनःशेपमुवाचार्तं कृत्वा रक्षां निरामयाम् ॥ १८ ॥

पवित्रपाशैरासक्तो रक्तमाल्यानुलेपनः ।
वैष्णवं यूपमासाद्य वाग्भिरग्निमुदाहर ॥ १९ ॥

इमे तु गाथे द्वे दिव्ये गायेथा मुनिपुत्रक ।
अम्बरीषस्य यज्ञेऽस्मिंस्ततः सिद्धिमवाप्स्यसि ॥ २० ॥

शुनश्शेपो गृहीत्वा ते द्वे गाथे सुसमाहितः ।
त्वरया राजसिंहं तमम्बरीषमुवाच ह ॥ २१ ॥

राजसिंह महासत्त्व शीघ्रं गच्छावहे सदः ।
निर्वर्तयस्व राजेन्द्र दीक्षां च समुपाहर ॥ २२ ॥

ऋषिपुत्रस्य तद्वाक्यं श्रुत्वा हर्षसमुत्सुकः ।
जगाम नृपतिः शीघ्रं यज्ञवाटमतन्द्रितः ॥ २३ ॥

सदस्यानुमते राजा पवित्रकृतलक्षणम् ।
पशुं रक्ताम्बरं कृत्वा यूपे तं समयोजयत् ॥ २४ ॥

स बद्धो वाग्भिरग्र्याभिरभितुष्टाव वै सुरौ ।
इन्द्रमिन्द्रानुजं चैव यथावन्मुनिपुत्रकः ॥ २५ ॥

ततः प्रीतः सहस्राक्षो रहस्यस्तुतितर्पितः ।
दीर्घमायुस्ततः प्रादाच्छुनश्शेपाय वासवः ॥ २६ ॥

स च राजा नरश्रेष्ठ यज्ञस्य च समाप्तवान् ।
फलं बहुगुणं राम सहस्राक्षप्रसादजम् ॥ २७ ॥

विश्वामित्रोऽपि धर्मात्मा तपस्तेपे महातपाः ।
पुष्करेषु नरश्रेष्ठ दश वर्षशतानि सः ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे द्विषष्टितमः सर्गः ॥
आदितः श्लोकाः 1912

## त्रिषष्टितमः सर्गः ॥ ६३ ॥

### मेनकासमागमः ॥

पूर्णे वर्षसहस्रे तु व्रतस्नातं महामुनिम् ।
अभ्यागच्छन्सुराः सर्वे तपःफलचिकीर्षवः ॥ १ ॥

अब्रवीत्सुमहातेजा ब्रह्मा सानुनयं वचः ।
ऋषिस्त्वमसि भद्रं ते स्वार्जितैः कर्मभिः शुभैः ॥ २ ॥

तमेवमुक्त्वा देवेशस्त्रिदिवं पुनरभ्यगात् ।
विश्वामित्रो महातेजा भूयस्तेपे महत्तपः ॥ ३ ॥

ततः कालेन महता मेनका परमाप्सराः ।
पुष्करेषु नरश्रेष्ठ स्नातुं समुपचक्रमे ॥ ४ ॥

तां ददर्श महातेजा मेनकां कुशिकात्मजः ।
रूपेणाप्रतिमां तत्र विद्युतं जलदे यथा ॥
दृष्ट्वा कन्दर्पवशगो मुनिस्तामिदमब्रवीत् ॥ ५ ॥

अप्सरः स्वागतं तेऽस्तु वस चेह ममाश्रमे ।
अनुगृह्णीष्व भद्रं ते मदनेन सुमोहितम् ॥ ६ ॥

इत्युक्ता सा वरारोहा तत्र वासमथाकरोत् ।
तपसो हि महाविघ्नो विश्वामित्रमुपागतः ॥ ७ ॥

तस्यां वसन्त्यां वर्षाणि पञ्च पञ्च च राघव ।
विश्वामित्राश्रमे तस्मिन् सुखेन व्यतिचक्रमुः ॥ ८ ॥

अथ काले गते तस्मिन्विश्वामित्रो महामुनिः ।
सव्रीड इव संवृत्तश्चिन्ताशोकपरायणः ॥ ९ ॥

बुद्धिर्मुनेः समुत्पन्ना सामर्षा रघुनन्दन ।
सर्वं सुराणां कर्मैतत्तपोऽपहरणं महत् ॥ १० ॥

अहोरात्रापदेशेन गताः संवत्सरा दश ।
काममोहाभिभूतस्य विघ्नोऽयं समुपस्थितः ॥ ११ ॥

विनिःश्वसन्मुनिवरः पश्चात्तापेन दुःखितः ।
भीतामप्सरसं दृष्ट्वा वेपन्तीं प्राञ्जलिं स्थिताम् ॥ १२ ॥

मेनकां मधुरैर्वाक्यैर्विसृज्य कुशिकात्मजः ।
उत्तरं पर्वतं राम विश्वामित्रो जगाम ह ॥ १३ ॥

स कृत्वा नैष्ठिकीं बुद्धिं तपूकामो महातपाः ।
कौशिकीतीरमासाद्य तपस्तेपे सुदारुणम् ॥ १४ ॥

तस्य वर्षसहस्राणि घोरे तपसि तिष्ठतः ।
उत्तरे पर्वते राम देवतानामभूद्भयम् ॥ १५ ॥

आमन्त्रयन्समागम्य सर्वे सर्षिगणाः सुराः ।
महर्षिशब्दं लभतां साध्वयं कुशिकात्मजः ॥ १६ ॥

देवतानां वचः श्रुत्वा सर्वलोकपितामहः ।
अब्रवीन्मधुरं वाक्यं विश्वामित्रं तपोधनम् ॥ १७ ॥

महर्षे स्वागतं तेऽस्तु तपसोग्रेण तोषितः ।
महत्त्वमृषिमुख्यत्वं ददामि तव कौशिक ॥ १८ ॥

ब्रह्मणस्तु वचः श्रुत्वा विश्वामित्रस्तपोधनः ।
प्राञ्जलिः प्रणतो भूत्वा प्रत्युवाच महायशाः ॥ १९ ॥

ब्रह्मर्षिशब्दमतुलं स्वार्जितैः कर्मभिः शुभैः ।
यदि मे भगवानाह ततोऽहं विजितेन्द्रियः ॥ २० ॥

तमुवाच ततो ब्रह्मा न तावत्त्वं जितेन्द्रियः ।
यतस्व मुनिशार्दूल इत्युक्त्वा त्रिदिवं गतः ॥ २१ ॥

विप्रस्थितेषु देवेषु विश्वामित्रो महामुनिः ।
ऊर्ध्वबाहुर्निरालम्बो वायुभक्षस्तपश्चरन् ॥ २२ ॥

घर्मे पञ्चतपा भूत्वा वर्षास्वाकाशसंश्रयः ।
शिशिरे सलिलस्थायी रात्र्यहानि तपोधनः ॥ २३ ॥

एवं वर्षसहस्राणि तपो घोरमुपागमत् ॥ २४ ॥

तस्मिन्संतप्यमाने तु विश्वामित्रे महामुनौ ।
संभ्रमः सुमहानासीत्सुराणां वासवस्य च ॥ २५ ॥

रम्भामप्सरसं शक्रस्सर्वैस्सह मरुद्गणैः ।
उवाचात्महितं वाक्यमहितं कौशिकस्य च ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे त्रिषष्टितमः सर्गः ॥
आदितः श्लोकाः 1938.

## चतुःषष्टितमः सर्गः ॥ ६४ ॥

रंभाशापः ॥

सुरकार्यमिदं रम्भे कर्तव्यं सुमहत्त्वया ।
लोभनं कौशिकस्येह काममोहसमन्वितम् ॥ १ ॥

तथोक्ता साऽप्सरा राम सहस्राक्षेण धीमता ।
व्रीडिता प्राञ्जलिर्भूत्वा प्रत्युवाच सुरेश्वरम् ॥ २ ॥

अयं सुरपते घोरो विश्वामित्रो महामुनिः ।
क्रोधमुत्स्रक्ष्यते घोरं मयि देव न संशयः ॥
ततो हि मे भयं देव प्रसादं कर्तुमर्हसि ॥ ३ ॥

तामुवाच सहस्राक्षो वेपमानां कृताञ्जलिम् ।
मा भैषि रंभे भद्रं ते कुरुष्व मम शासनम् ॥ ४ ॥

कोकिलो हृदयग्राही माधवे रुचिरद्रुमे ।
अहं कन्दर्पसहितः स्थास्यामि तव पार्श्वतः ॥ ५ ॥

त्वं हि रूपं बहुगुणं कृत्वा परमभास्वरम् ।
तमृषिं कौशिकं रम्भे भेदयस्व तपस्विनम् ॥ ६ ॥

सा श्रुत्वा वचनं तस्य कृत्वा रूपमनुत्तमम् ।
लोभयामास ललिता विश्वामित्रं शुचिस्मिता ॥ ७ ॥

कोकिलस्य तु शुश्राव वल्गु व्याहरतः स्वनम् ।
संप्रहृष्टेन मनसा तत एनामुदैक्षत ॥ ८ ॥

अथ तस्य च शब्देन गीतेनाप्रतिमेन च ।
दर्शनेन च रम्भाया मुनिः सन्देहमागतः ॥ ९ ॥

सहस्राक्षस्य तत्कर्म विज्ञाय मुनिपुङ्गवः ।
रम्भां कोपसमाविष्टः शशाप कुशिकात्मजः ॥ १० ॥

यन्मां लोभयसे रम्भे कामक्रोधजयैषिणम् ।
दश वर्षसहस्राणि शैली स्थास्यसि दुर्भगे ॥ ११ ॥

ब्राह्मणः सुमहातेजास्तपोबलसमन्वितः ।
उद्धरिष्यति रम्भे त्वां मत्क्रोधकलुषीकृताम् ॥ १२ ॥

एवमुक्त्वा महातेजा विश्वामित्रो महामुनिः ।
अशक्नुवन्धारयितुं कोपसन्तापमात्मनः ॥ १३ ॥

तस्य शापेन महता रम्भा शैली तदाऽभवत् ।
वचः श्रुत्वा च कन्दर्पो महर्षेः स च निर्गतः ॥ १४ ॥

कोपेन सुमहातेजास्तपोऽपहरणे कृते ।
इन्द्रियैरजितै राम न लेभे शान्तिमात्मनः ॥ १५ ॥

बभूवास्य मनश्चिन्ता तपोऽपहरणे कृते ॥ १६ ॥

नैव क्रोधं गमिष्यामि न च वक्ष्ये कथञ्चन ।
अथवा नोच्छ्वसिष्यामि संवत्सरशतान्यपि ॥ १७ ॥

अहं विशोषयिष्यामि ह्यात्मानं विजितेन्द्रियः ।
तावद्यावद्धि मे प्राप्तं ब्राह्मण्यं स्वतपोऽर्जितम् ॥
अनुच्छ्वसन्नभुञ्जानस्तिष्ठेयं शाश्वतीः समाः ॥ १८ ॥

न हि मे तप्यमानस्य क्षयं यास्यन्ति मूर्तयः ॥ १९ ॥

एवं वर्षसहस्रस्य दीक्षां स मुनिपुङ्गवः ।
चकाराप्रतिमां लोके प्रतिज्ञां रघुनन्दन ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे चतुःषष्टितमः सर्गः ॥
आदितः श्लोकाः 1958

## पञ्चषष्टितमः सर्गः ॥ ६५ ॥

### विश्वामित्रस्य ब्रह्मर्षित्वप्राप्तिः ॥

अथ हैमवतीं राम दिशं त्यक्त्वा महामुनिः ।
पूर्वां दिशमनुप्राप्य तपस्तेपे सुदारुणम् ॥ १ ॥

मौनं वर्षसहस्रस्य कृत्वा व्रतमनुत्तमम् ।
चकाराप्रतिमं राम तपः परमदुष्करम् ॥ २ ॥

पूर्णे वर्षसहस्रे तु काष्ठभूतं महामुनिम् ।
विघ्नैर्बहुभिराधूतं क्रोधो नान्तरमाविशत् ॥ ३ ॥

स कृत्वा निश्चयं राम तप आतिष्ठदव्ययम् ॥ ४ ॥

तस्य वर्षसहस्रस्य व्रते पूर्णे महाव्रतः ।
भोक्तुमारब्धवानन्नं तस्मिन्काले रघूत्तम ॥
इन्द्रो द्विजातिर्भूत्वा तं सिद्धमन्नमयाचत ॥ ५ ॥

तस्मै दत्त्वा तदा सिद्धं सर्वं विप्राय निश्चितः ।
निःशेषितेऽन्ने भगवानभुक्त्वैव महातपाः ॥
न किञ्चिदवदद्विप्रं मौनव्रतमथास्थितः ॥ ६ ॥

तथैवासीत् पुनर्मौनमनुच्छ्वासं चकार ह ।
अथ वर्षसहस्रं वै नोच्छ्वसन्मुनिपुङ्गवः ॥ ७ ॥

तस्यानुच्छ्वसमानस्य मूर्ध्नि धूमो व्यजायत ।
त्रैलोक्यं येन संभ्रान्तमादीपितमिवाभवत् ॥ ८ ॥

ततो देवर्षिगन्धर्वाः पन्नगोरगराक्षसाः ।
मोहितास्तेजसा तस्य तपसा मन्दरश्मयः ॥ ९ ॥

कश्मलोपहताः सर्वे पितामहमथाब्रुवन् ॥ १० ॥

बहुभिः कारणैर्देव विश्वमित्रो महामुनिः ।
लोभितः क्रोधितश्चैव तपसा चाभिवर्धते ॥ ११ ॥

न ह्यस्य वृजिनं किञ्चिद्दृश्यते सूक्ष्ममप्यथ ॥ १२ ॥

न दीयते यदि त्वस्य मनसा यदभीप्सितम् ।
विनाशयति त्रैलोक्यं तपसा सचराचरम् ॥ १३ ॥

व्याकुलाश्च दिशः सर्वा न च किञ्चित्प्रकाशते ।
सागराः क्षुभिताः सर्वे विशीर्यन्ते च पर्वताः ॥ १४ ॥

प्रकम्पते च पृथिवी वायुर्वाति भृशाकुलः ।
ब्रह्मन्न प्रतिजानीमो नास्तिको जायते जनः ॥ १५ ॥

संमूढमिव त्रैलोक्यं संप्रक्षुभितमानसम् ।
भास्करो निष्प्रभश्चैव महर्षेस्तस्य तेजसाः ॥ १६ ॥

बुद्धिं न कुरुते यावन्नाशे देव महामुनिः ।
तावत्प्रसाद्यो भगवानग्निरूपो महाद्युतिः ॥ १७ ॥

कालाग्निना यथा पूर्वं त्रैलोक्यं दह्यतेऽखिलम् ।
देवराज्यं चिकीर्षेत दीयतामस्य यन्मतम् ॥ १८ ॥

ततः सुरगणाः सर्वे पितामहपुरोगमाः ।
विश्वामित्रं महात्मानं वाक्यं मधुरमब्रुवन् ॥ १९ ॥

ब्रह्मर्षे स्वागतं तेऽस्तु तपसा स्म सुतोषिताः ॥ २० ॥

ब्राह्मण्यं तपसोग्रेण प्राप्तवानसि कौशिक ।
दीर्घमायुश्च ते ब्रह्मन् ददामि समरुद्गणः ॥
स्वस्ति प्राप्नुहि भद्रं ते गच्छ सौम्य यथासुखम् ॥ २१ ॥

पितामहवचः श्रुत्वा सर्वेषां च दिवौकसाम् ।
कृत्वा प्रणामं मुदितो व्याजहार महामुनिः ॥ २२ ॥

ब्राह्मण्यं यदि मे प्राप्तं दीर्घमायुस्तथैव च ।
ओंकारोऽथ वषट्कारो वेदाश्च वरयन्तु माम् ॥ २३ ॥

क्षत्रवेदविदां श्रेष्ठो ब्रह्मवेदविदामपि ।
ब्रह्मपुत्रो वसिष्ठो मामेवं वदतु देवताः ॥
यद्ययं परमः कामः कृतो यान्तु सुरर्षभाः ॥ २४ ॥

ततः प्रसादितो देवैर्वसिष्ठो जपतां वरः ।
सख्यं चकार ब्रह्मर्षिरेवमस्त्विति चाब्रवीत् ॥ २५ ॥

ब्रह्मर्षिस्त्वं न सन्देहः सर्वं संपत्स्यते तव ।
इत्युक्त्वा देवताश्चापि सर्वा जग्मुर्यथागतम् ॥ २६ ॥

विश्वामित्रोऽपि धर्मात्मा लब्ध्वा ब्राह्मण्यमुत्तमम् ।
पूजयामास ब्रह्मर्षिं वसिष्ठं जपतां वरम् ॥
कृतकामो महीं सर्वां चचार तपसि स्थितः ॥ २७ ॥

एवं त्वनेन ब्राह्मण्यं प्राप्तं राम महात्मना ।
एष राम मुनिश्रेष्ठ एष विग्रहवांस्तपः ॥
एष धर्मपरो नित्यं वीर्यस्यैष परायणम् ॥ २८ ॥

शतानन्दवचः श्रुत्वा रामलक्ष्मणसंनिधौ ।
जनकः प्राञ्जलिर्वाक्यमुवाच कुशिकात्मजम् ॥ २९ ॥

धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे मुनिपुंगव ।
यज्ञं काकुत्स्थसहितः प्राप्तवानसि कौशिक ॥ ३० ॥

पावितोऽहं त्वया ब्रह्मन्दर्शनेन महामुने ।
विश्वामित्र महाभाग ब्रह्मर्षीणां वरोत्तम ॥
गुणा बहुविधाः प्राप्तास्तव संदर्शनान्मया ॥ ३१ ॥
विस्तरेण च ते ब्रह्मन्कीर्त्यमानं महत्तपः ।
श्रुतं मया महातेजो रामेण च महात्मना ॥ ३२ ॥
सदस्यैः प्राप्य च सदः श्रुतास्ते बहवो गुणाः ॥ ३३ ॥
अप्रमेयं तपस्तुभ्यमप्रमेयं च ते बलम् ।
अप्रमेया गुणाश्चैव नित्यं ते कुशिकात्मज ॥ ३४ ॥
तृप्तिराश्चर्यभूतानां कथानां नास्ति मे विभो ।
कर्मकालो मुनिश्रेष्ठ लम्बते रविमण्डलम् ॥ ३५ ॥
श्वः प्रभाते महातेजो द्रष्टुमर्हसि मां पुनः ।
स्वागतं तपतां श्रेष्ठ मामनुज्ञातुमर्हसि ॥ ३६ ॥
एवमुक्तो मुनिवरः प्रशस्य पुरुषर्षभम् ।
विससर्जाशु जनकं प्रीतं प्रीतमनास्तदा ॥ ३७ ॥
एवमुक्त्वा मुनिश्रेष्ठं वैदेहो मिथिलाधिपः ।
प्रदक्षिणं चकाराशु सोपाध्यायः सबान्धवः ॥ ३८ ॥
विश्वामित्रोऽपि धर्मात्मा सरामः सहलक्ष्मणः ।
स्ववाटमभिचक्राम पूज्यमानो महर्षिभिः ॥ ३९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे पञ्चषष्टितमः सर्गः ॥

आदितः श्लोकाः 1997

इत्यार्षे श्रीमद्रामायणे त्रितीयेऽह्नि वर्तमानकथाप्रसङ्गः ॥

[पुरा कुशलवाभ्यां श्रीरामसन्निधावश्वमेधयज्ञवाटे द्वात्रिंशति दिनेषु गीते श्रीमद्रामायणे चतुर्थेऽह्नि बालकाण्डे षट्षष्टितमसर्गमारभ्य यावत्काण्डसमाप्ति अयोध्याकाण्डे प्रथमसर्गमारभ्य नवमसर्गपर्यन्तं च (1998—2751 श्लोकाः) गीतम् ।
तस्मिन् दिने गीताः श्लोकाः 751]

## षट्षष्टितमः सर्गः ॥ ६६ ॥

### रामस्य धनुर्दर्शनम् ॥

ततः प्रभाते विमले कृतकर्मा नराधिपः ।
विश्वामित्रं महात्मानमाजुहाव सराघवम् ॥ १ ॥

तमर्चयित्वा धर्मात्मा शास्त्रदृष्टेन कर्मणा ।
राघवौ च महात्मानौ तदा वाक्यमुवाच ह ॥ २ ॥

भगवन्स्वागतं तेऽस्तु किं करोमि तवानघ ।
भवानाज्ञापयतु मामाज्ञाप्यो भवता ह्यहम् ॥ ३ ॥

एवमुक्तस्तु धर्मात्मा जनकेन महात्मना ।
प्रत्युवाच मुनिश्रेष्ठो वाक्यं वाक्यविशारदः ॥ ४ ॥

पुत्रौ दशरथस्येमौ क्षत्रियौ लोकविश्रुतौ ।
धनुर्वेदविशेषज्ञौ कुशलौ रामलक्ष्मणौ ॥
द्रष्टुकामौ धनुःश्रेष्ठं यदेतत्त्वयि तिष्ठति ॥ ५ ॥

एतद्दर्शय भद्रं ते कृतकामौ नृपात्मजौ ।
दर्शनादस्य धनुषो यथेष्टं प्रतियास्यतः ॥ ६ ॥

एवमुक्तस्तु जनकः प्रत्युवाच महामुनिम् ।
श्रूयतामस्य धनुषो यदर्थमिह तिष्ठति ॥ ७ ॥

देवरात इति ख्यातो निमेः षष्ठो महीपतिः ।
न्यासोऽयं तस्य भगवन् हस्ते दत्तो महात्मना ॥ ८ ॥

दक्षयज्ञवधे पूर्वं धनुरायम्य वीर्यवान् ।
रुद्रस्तु त्रिदशान् रोषात् सलीलमिदमब्रवीत् ॥ ९ ॥

यस्माद्भागार्थिनो भागान्नाकल्पयत मे सुराः ।
वराङ्गाणि महार्हाणि धनुषा शातयामि वः ॥ १० ॥

ततो विमनसः सर्वे देवा वै मुनिपुङ्गव ।
प्रसादयन्ति देवेशं तेषां प्रीतोऽभवद्भवः ॥ ११ ॥

प्रीतियुक्तः स सर्वेषां ददौ तेषां महात्मनाम् ॥ १२ ॥

तदेतद्देवदेवस्य धनूरत्नं महात्मनः ।
न्यासभूतं तदा न्यस्तमस्माकं पूर्वके विभो ॥ १३ ॥

अथ मे कृषतः क्षेत्रं लाङ्गलादुत्थिता पुरा ।
क्षेत्रं शोधयता लब्धा नाम्ना सीतेति विश्रुता ॥ १४ ॥

भूतलादुत्थिता सा तु व्यवर्धत ममात्मजा ।
वीर्यशुल्केति मे कन्या स्थापितेयमयोनिजा ॥ १५ ॥

भूतलादुत्थितां तां तु वर्धमानां ममात्मजाम् ।
वरयामासुरागम्य राजानो मुनिपुङ्गव ॥ १६ ॥

तेषां वरयतां कन्यां सर्वेषां पृथिवीक्षिताम् ।
वीर्यशुल्केति भगवन्न ददामि सुतामहम् ॥ १७ ॥

ततः सर्वे नृपतयः समेत्य मुनिपुङ्गव ।
मिथिलामभ्युपागम्य वीर्यजिज्ञासवस्तदा ॥ १८ ॥

तेषां जिज्ञासमानानां वीर्यं धनुरुपाहृतम् ।
न शेकुर्ग्रहणे तस्य धनुषस्तोलनेऽपि वा ॥ १९ ॥

तेषां वीर्यवतां वीर्यमल्पं ज्ञात्वा महामुने ।
प्रत्याख्याता नृपतयस्तन्निबोध तपोधन ॥ २० ॥

ततः परमकोपेन राजानो मुनिपुङ्गव ।
अरुन्धन्मिथिलां सर्वे वीर्यसंदेहमागताः ॥ २१ ॥

आत्मानमवधूतं ते विज्ञाय नृपपुङ्गवाः ।
रोषेण महताऽऽविष्टाः पीडयन्मिथिलां पुरीम् ॥ २२ ॥

ततः संवत्सरे पूर्णे क्षयं यातानि सर्वशः ।
साधनानि मुनिश्रेष्ठ ततोऽहं भृशदुःखितः ॥ २३ ॥

ततो देवगणान्सर्वांस्तपसाऽहं प्रसादयम् ।
ददुश्च परमप्रीताश्चतुरङ्गबलं सुराः ॥ २४ ॥

ततो भग्ना नृपतयो हन्यमाना दिशो ययुः ।
अवीर्या वीर्यसन्दिग्धाः सामात्याः पापकारिणः ॥ २५ ॥

तदेतन्मुनिशार्दूल धनुः परमभास्वरम् ।
रामलक्ष्मणयोश्चापि दर्शयिष्यामि सुव्रत ॥ २६ ॥

यद्यस्य धनुषो रामः कुर्यादारोपणं मुने ।
सुतामयोनिजां सीतां दद्यां दाशरथेरहम् ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे षट्षष्टितमः सर्गः ॥
आदितः श्लोकाः 2024

सप्तषष्टितमः सर्गः ॥ ६७ ॥

धनुर्भङ्गः ॥

जनकस्य वचः श्रुत्वा विश्वामित्रो महामुनिः ।
धनुर्दर्शय रामाय इति होवाच पार्थिवम् ॥ १ ॥

ततः स राजा जनकः सचिवान्व्यादिदेश ह ।
धनुरानीयतां दिव्यं गन्धमाल्यविभूषितम् ॥ २ ॥

जनकेन समादिष्टाः सचिवाः प्राविशन्पुरम् ।
तद्धनुः पुरतः कृत्वा निर्जग्मुः पार्थिवाज्ञया ॥ ३ ॥

नृणां शतानि पञ्चाशद्व्यायतानां महात्मनाम् ।
मञ्जूषामष्टचक्रां तां समूहुस्ते कथंचन ॥ ४ ॥

तामादाय तु मञ्जूषामायसीं यत्र तद्धनुः ।
सुरोपमं ते जनकमूचुर्नृपतिमन्त्रिणः ॥ ५ ॥

इदं धनुर्वरं राजन् पूजितं सर्वराजभिः ।
मिथिलाधिप राजेन्द्र दर्शनीयं यदिच्छसि ॥ ६ ॥

तेषां नृपो वचः श्रुत्वा कृताञ्जलिरभाषत ।
विश्वामित्रं महात्मानं तौ चोभौ रामलक्ष्मणौ ॥ ७ ॥

इदं धनुर्वरं ब्रह्मञ्जनकैरभिपूजितम् ।
राजभिश्च महावीर्यैरशक्तैः पूरितुं पुरा ॥ ८ ॥

नैतत्सुरगणाः सर्वे नासुरा न च राक्षसाः ।
गन्धर्वयक्षप्रवराः सकिन्नरमहोरगाः ॥ ९ ॥

क्व गतिर्मानुषाणां च धनुषोऽस्य प्रपूरणे ।
आरोपणे समायोगे वेपने तोलनेऽपि वा ॥ १० ॥

तदेतद्धनुषां श्रेष्ठमानीतं मुनिपुङ्गव ।
दर्शयैतन्महाभाग अनयो राजपुत्रयोः ॥ ११ ॥

विश्वामित्रस्तु धर्मात्मा श्रुत्वा जनकभाषितम् ।
वत्स राम धनुः पश्य इति राघवमब्रवीत् ॥ १२ ॥

महर्षेर्वचनाद्रामो यत्र तिष्ठति तद्धनुः ।
मञ्जूषां तामपावृत्य दृष्ट्वा धनुरथाब्रवीत् ॥ १३ ॥

इदं धनुर्वरं ब्रह्मन् संस्पृशामीह पाणिना ।
यत्नवांश्च भविष्यामि तोलने पूरणेऽपि वा
बाढमित्येव तं राजा मुनिश्च समभाषत ॥ १४ ॥

लीलया स धनुर्मध्ये जग्राह वचनान्मुनेः ।
पश्यतां नृसहस्राणां बहूनां रघुनन्दनः ॥ १५ ॥

आरोपयत् स धर्मात्मा सलीलमिव तद्धनुः ।
तद्बभञ्ज धनुर्मध्ये नरश्रेष्ठो महायशाः ॥ १६ ॥

तस्य शब्दो महानासीन्निर्घातसमनिस्वनः ।
भूमिकम्पश्च सुमहान् पर्वतस्येव दीर्यतः ॥ १७ ॥

निपेतुश्च नराः सर्वे तेन शब्देन मोहिताः ।
वर्जयित्वा मुनिवरं राजानं तौ च राघवौ ॥ १८ ॥

प्रत्याश्वस्ते जने तस्मिन् राजा विगतसाध्वसः ।
उवाच प्राञ्जलिर्वाक्यं वाक्यज्ञो मुनिपुङ्गवम् ॥ १९ ॥

भगवन् दृष्टवीर्यो मे रामो दशरथात्मजः ।
अत्यद्भुतमचिन्त्यं च न तर्कितमिदं मया ॥ २० ॥

जनकानां कुले कीर्तिमाहरिष्यति मे सुता ।
सीता भर्तारमासाद्य रामं दशरथात्मजम् ॥ २१ ॥

मम सत्या प्रतिज्ञा च वीर्यशुल्केति कौशिक ।
सीता प्राणैर्बहुमता देया रामाय मे सुता ॥ २२ ॥

भवतोऽनुमते ब्रह्मन् शीघ्रं गच्छन्तु मन्त्रिणः ।
मम कौशिक भद्रं ते अयोध्यां त्वरिता रथैः ॥ २३ ॥

राजानं प्रश्रितैर्वाक्यैरानयन्तु पुरं मम ।
प्रदानं वीर्यशुल्कायाः कथयन्तु च सर्वशः ॥ २४ ॥

मुनिगुप्तौ च काकुत्स्थौ कथयन्तु नृपाय वै ।
प्रीयमाणं तु राजानमानयन्तु सुशीघ्रगाः ॥ २५ ॥

कौशिकश्च तथेत्याह राजा चाभाष्य मन्त्रिणः ।
अयोध्यां प्रेषयामास धर्मात्मा कृतशासनान् ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे सप्तषष्टितमः सर्गः ॥

आदितः श्लोकाः 2050.

## अष्टषष्टितमः सर्गः ॥ ६८ ॥

### दशरथस्य मिथिलाप्रस्थानम् ॥

जनकेन समादिष्टा दूतास्ते क्लान्तवाहनाः ।
त्रिरात्रमुषिता मार्गे तेऽयोध्यां प्राविशन्पुरीम् ॥ १ ॥

राज्ञो भवनमासाद्य द्वारस्थानिदमब्रुवन् ।
शीघ्रं निवेद्यतां राज्ञे दूतान्नो जनकस्य च ।
इत्युक्ता द्वारपालास्ते राघवाय न्यवेदयन् ॥ २ ॥

ते राजवचनाद्दूता राजवेश्म प्रवेशिताः ।
ददृशुर्देवसङ्काशं वृद्धं दशरथं नृपम् ॥ ३ ॥

बद्धाञ्जलिपुटाः सर्वे दूता विगतसाध्वसाः ।
राजानं प्रणता वाक्यमब्रुवन्मधुराक्षरम् ॥ ४ ॥

राजसिंह महासत्त्व रघुश्रेष्ठ परन्तप ।
मैथिलो जनको राजा साग्निहोत्रपुरस्कृतम् ॥
कुशलं चाव्ययं चैव सोपाध्यायपुरोहितम् ॥ ५ ॥

मुहुर्मुहुर्मधुरया स्नेहसंयुक्तया गिरा ।
जनकस्त्वां महाराजाऽऽपृच्छते सपुरःसरम् ॥ ६ ॥

पृष्ट्वा कुशलमव्यग्रं वैदेहो मिथिलाधिपः ।
कौशिकानुमते वाक्यं भवन्तमिदमब्रवीत् ॥ ७ ॥

पूर्वं प्रतिज्ञा विहिता वीर्यशुल्का ममात्मजा ।
राजानश्च कृतामर्षा निर्वीर्या विमुखीकृताः ॥ ८ ॥

सेयं मम सुता राजन्विश्वामित्रपुरःसरैः ।
यदृच्छयाऽऽगतैर्वीरैर्निर्जिता तव पुत्रकैः ॥ ९ ॥

तच्च राजन्धनुर्दिव्यं मध्ये भग्नं महात्मना ।
रामेण हि महातेजो महत्यां जनसंसदि ॥ १० ॥

अस्मै देया मया सीता वीर्यशुल्का महात्मने ।
प्रतिज्ञां कर्तुमिच्छामि तदनुज्ञातुमर्हसि ॥ ११ ॥

सोपाध्यायो महाराज पुरोहितपुरस्कृतः ।
शीघ्रमागच्छ भद्रं ते द्रष्टुमर्हसि राघवौ ॥ १२ ॥

प्रतिज्ञां मम राजेन्द्र निर्वर्तयितुमर्हसि ।
पुत्रयोरुभयोः प्रीतिं लप्स्यसे वीर्यनिर्जिताम् ॥ १३ ॥

एवं विदेहाधिपतिर्मधुरं वाक्यमब्रवीत् ।
विश्वामित्राभ्यनुज्ञातः शतानन्दमते स्थितः ॥ १४ ॥
राजन्नागच्छसि यदि न चेद्वा रघुनन्दन ।
आज्ञापयोत्तरं देव जनकाय नरेश्वर ॥ १५ ॥
इत्युक्त्वा विरता दूता राजगौरवशङ्किताः ॥ १६ ॥
दूतवाक्यं तु तच्छ्रुत्वा राजा परमहर्षितः ।
वसिष्ठं वामदेवं च मन्त्रिणोऽन्यांश्च सोऽब्रवीत् ॥ १७ ॥
गुप्तः कुशिकपुत्रेण कौसल्यानन्दवर्धनः ।
लक्ष्मणेन सह भ्रात्रा विदेहेषु वसत्यसौ ॥ १८ ॥
दृष्टवीर्यस्तु काकुत्स्थो जनकेन महात्मना ।
संप्रदानं सुतायास्तु राघवे कर्तुमिच्छति ॥ १९ ॥
यदि वो रोचते वृत्तं जनकस्य महात्मनः ।
पुरीं गच्छामहे शीघ्रं मा भूत्कालस्य पर्ययः ॥ २० ॥
मन्त्रिणो बाढमित्याहुः सह सर्वैर्महर्षिभिः ।
सुप्रीतश्चाब्रवीद्राजा श्वो यात्रेति स मन्त्रिणः ॥ २१ ॥
मन्त्रिणस्तु नरेन्द्रेण रात्रिं परमसत्कृताः ।
ऊषुः प्रमुदिताः सर्वे गुणैः सर्वैः समन्विताः ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे अष्टषष्टितमः सर्गः ॥

आदितः श्लोकाः 2072

## एकोनसप्ततितमः सर्गः ॥ ६९ ॥

### मिथिलागमनम् ॥

ततो रात्र्यां व्यतीतायां सोपाध्यायः सबान्धवः ।
राजा दशरथो हृष्टः सुमन्त्रमिदमब्रवीत् ॥ १ ॥

अद्य सर्वे धनाध्यक्षा धनमादाय पुष्कलम् ।
व्रजन्त्वग्रे सुविहिता नानारत्नसमन्विताः ॥ २ ॥

चतुरङ्गबलं चापि शीघ्रं निर्यातु सर्वशः ।
ममाज्ञासमकालं च यानयुग्यमनुत्तमम् ॥ ३ ॥

वसिष्ठो वामदेवश्च जाबालिरथ काश्यपः ।
मार्कण्डेयः सुदीर्घायुर्ऋषिः कात्यायनस्तथा ॥ ४ ॥

एते द्विजाः प्रयान्त्वग्रे स्यन्दनं योजयस्व मे ।
यथा कालात्ययो न स्याद्दूता हि त्वरयन्ति माम् ॥ ५ ॥

इत्युक्त्वा स महातेजा राजा दशरथो रथम् ।
आरुरोह यथा भानुर्भगवान्रघुनन्दनः ॥ ६ ॥

वचनात्तु नरेन्द्रस्य सा सेना चतुरङ्गिणी ।
राजानमृषिभिः सार्धं व्रजन्तं पृष्ठतोऽन्वगात् ॥ ७ ॥

गत्वा चतुरहं मार्गं विदेहानभ्युपेयिवान् ।
राजा तु जनकः श्रीमाञ्छ्रुत्वा पूजामकल्पयत् ॥ ८ ॥

ततो राजानमासाद्य वृद्धं दशरथं नृपम् ।
जनको मुदितो राजा हर्षं च परमं ययौ ॥
उवाच च नरश्रेष्ठो नरश्रेष्ठं मुदाऽन्वितम् ॥ ९ ॥

स्वागतं ते महाराज दिष्ट्या प्राप्तोऽसि राघव ।
पुत्रयोरुभयोः प्रीतिं लप्स्यसे वीर्यनिर्जिताम् ॥ १० ॥

दिष्ट्या प्राप्तो महातेजा वसिष्ठो भगवानृषिः ।
सह सर्वैर्द्विजश्रेष्ठैर्देवैरिव शतक्रतुः ॥ ११ ॥

दिष्ट्या मे निर्जिता विघ्ना दिष्ट्या मे पूजितं कुलम् ।
राघवैः सह संबन्धाद्वीर्यश्लाघ्यैर्महात्मभिः ॥ १२ ॥

श्वः प्रभाते नरश्रेष्ठ निर्वर्तयितुमर्हसि ।
यज्ञस्यान्ते नरश्रेष्ठ विवाहमृषिसत्तमैः ॥ १३ ॥

तस्य तद्वचनं श्रुत्वा ऋषिमध्ये नराधिपः ।
वाक्यं वाक्यविदां श्रेष्ठः प्रत्युवाच महीपतिम् ॥ १४ ॥

प्रतिग्रहो दातृवशः श्रुतमेतन्मया पुरा ।
यथा वक्ष्यसि धर्मज्ञ तत्करिष्यामहे वयम् ॥ १५ ॥

धर्मिष्ठं च यशस्यं च वचनं सत्यवादिनः ।
श्रुत्वा विदेहाधिपतिः परं विस्मयमागतः ॥ १६ ॥

ततः सर्वे मुनिगणाः परस्परसमागमे ।
हर्षेण महता युक्तास्तां निशामवसन्सुखम् ॥ १७ ॥

राजा च राघवौ पुत्रौ निशाम्य परिहर्षितः ।
उवास परमप्रीतो जनकेनाभिपूजितः ॥ १८ ॥

जनकोऽपि महातेजाः क्रियां धर्मेण तत्त्ववित् ।
यज्ञस्य च सुताभ्यां च कृत्वा रात्रिमुवास ह ॥ १९ ॥

ततो मुनीनां च नराधिपानां
विसृज्य संघाञ्जनको महात्मनाम् ।
तद्यज्ञवाटं विधिवत्प्रविश्य
उवास रात्रिं बलसूदनप्रियः ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे एकोनसप्ततितमः सर्गः ॥
आदितः श्लोकाः 2092.

सप्ततितमः सर्गः ॥ ७० ॥

दशरथवंशवर्णनम् ॥

ततः प्रभाते जनकः कृतकर्मा महर्षिभिः ।
उवाच वाक्यं वाक्यज्ञः शतानन्दं पुरोहितम् ॥ १ ॥

भ्राता मम महातेजा वीर्यवानतिधार्मिकः ।
कुशध्वज इति ख्यातः पुरीमध्यवसच्छुभाम् ॥ २ ॥

वार्यामलकपर्यन्तां पिबन्निक्षुमतीं नदीम् ।
साङ्काश्यां पुण्यसङ्काशां विमानमिव पुष्पकम् ॥ ३ ॥

तमहं द्रष्टुमिच्छामि यज्ञगोप्ता स मे मतः ।
प्रीतिं सोऽपि महातेजा इमां भोक्ता मया सह ॥ ४ ॥

एवमुक्ते तु वचने शतानन्दस्य सन्निधौ ।
आगताः केचिदव्यग्रा जनकस्तान्समादिशत् ॥ ५ ॥

शासनात्तु नरेन्द्रस्य प्रययुः शीघ्रवाजिभिः ।
समानेतुं नरव्याघ्रं विष्णुमिन्द्राज्ञया यथा ॥ ६ ॥

साङ्काश्यां ते समागत्य ददृशुश्च कुशध्वजम् ।
न्यवेदयन्यथावृत्तं जनकस्य च चिन्तितम् ॥
तद्वृत्तं नृपतिः श्रुत्वा दूतश्रेष्ठैर्महाबलैः ॥ ७ ॥

आज्ञयाऽथ नरेन्द्रस्य आजगाम कुशध्वजः ।
स ददर्श महातेजा जनकं धर्मवत्सलम् ॥ ८ ॥

सोऽभिवाद्य शतानन्दं राजानं चापि धार्मिकम् ।
राजार्हं परमं दिव्यमासनं चाध्यरोहत ॥ ९ ॥

उपविष्टावुभौ तौ तु भ्रातरावमितौजसौ ।
प्रेषयामासतुर्वीरौ मन्त्रिश्रेष्ठं सुदामनम् ॥ १० ॥

गच्छ मन्त्रिपते शीघ्रमैक्ष्वाकममितौजसम् ।
आत्मजैः सह दुर्धर्षमानयस्व समन्त्रिणम् ॥ ११ ॥

औपकार्यं स गत्वा तु रघूणां कुलवर्धनम् ।
ददर्श शिरसा चैनमभिवाद्येदमब्रवीत् ॥ १२ ॥

अयोध्याधिपते वीर वैदेहो मिथिलाधिपः ।
स त्वां द्रष्टुं व्यवसितः सोपाध्यायपुरोहितम् ॥ १३ ॥

मन्त्रिश्रेष्ठवचः श्रुत्वा राजा सर्षिगणस्तदा ।
सबन्धुरगमत्तत्र जनको यत्र वर्तते ॥ १४ ॥

राजा च जनकः श्रीमान् राजराजं सहानुजः ।
प्रत्युद्गम्य प्रहृष्टात्मा प्रवेश्य गृहमर्हयत् ॥ १५ ॥

स राजा मन्त्रिसहितः सोपाध्यायः सबान्धवः ।
वाक्यं वाक्यविदां श्रेष्ठो वैदेहमिदमब्रवीत् ॥ १६ ॥

विदितं ते महाराज इक्ष्वाकुकुलदैवतम् ।
वक्ता सर्वेषु कृत्येषु वसिष्ठो भगवानृषिः ॥ १७ ॥

विश्वामित्राभ्यनुज्ञातः सह सर्वैर्महर्षिभिः ।
एष वक्ष्यति धर्मात्मा वसिष्ठो मे यथाक्रमम् ॥ १८ ॥

एवमुक्त्वा नरश्रेष्ठे राज्ञां मध्ये महात्मनाम् ।
तूष्णींभूते दशरथे वसिष्ठो भगवानृषिः ॥
उवाच वाक्यं वाक्यज्ञो वैदेहं सपुरोधसम् ॥ १९ ॥

अव्यक्तप्रभवो ब्रह्मा शाश्वतो नित्य अव्ययः ।
तस्मान्मरीचिः संजज्ञे मरीचेः काश्यपः सुतः ॥ २० ॥

विवस्वान्काश्यपाज्जज्ञे मनुर्वैवस्वतः स्मृतः ।
मनुः प्रजापतिः पूर्वमिक्ष्वाकुस्तु मनोः सुतः ॥ २१ ॥

तमिक्ष्वाकुमयोध्यायां राजानं विद्धि पूर्वकम् ।
इक्ष्वाकोस्तु सुतः श्रीमान्कुक्षिरित्येव विश्रुतः ॥ २२ ॥

कुक्षेरथात्मजः श्रीमान्विकुक्षिरुदपद्यत ।
विकुक्षेस्तु महातेजा बाणः पुत्रः प्रतापवान् ॥ २३ ॥

बाणस्य तु महातेजा अनरण्यः प्रतापवान् ।
अनरण्यात् पृथुर्जज्ञे त्रिशङ्कुस्तु पृथोः सुतः ॥ २४ ॥

त्रिशङ्कोरभवत् पुत्रो धुन्धुमारो महायशाः ।
धुन्धुमारान्महातेजा युवनाश्वो महारथः ॥
युवनाश्वसुतः श्रीमान् मान्धाता पृथिवीपतिः ॥ २५ ॥

मान्धातुस्तु सुतः श्रीमान् सुसन्धिरुदपद्यत ।
सुसन्धेरपि पुत्रौ द्वौ ध्रुवसन्धिः प्रसेनजित् ॥ २६ ॥

यशस्वी ध्रुवसन्धेस्तु भरतो नाम नामतः ।
भरतात्तु महातेजा असितो नाम जातवान् ॥ २७ ॥

यस्यैते प्रतिराजान उदपद्यन्त शत्रवः ।
हैहयास्तालजङ्घाश्च शूराश्च शशिबिन्दवः ॥ २८ ॥

तांस्तु संप्रतियुध्यन् हि युद्धे राजा प्रवासितः ॥ २९ ॥

हिमवन्तमुपागम्य भार्याभ्यां सहितोऽवसत् ।
असितोऽल्पबलो राजा कालधर्ममुपेयिवान् ॥ ३० ॥

द्वे चास्य भार्ये गर्भिण्यौ बभूवतुरिति श्रुतिः ।
एका गर्भविनाशाय सपत्न्यै तु गरं ददौ ॥ ३१ ॥

ततः शैलवरे रम्ये बभूवाभिरतो मुनिः ।
भार्गवश्च्यवनो नाम हिमवन्तमुपाश्रितः ॥ ३२ ॥

तत्र चैका महाभागा भार्गवं देववर्चसम् ।
ववन्दे पद्मपत्राक्षी कांक्षन्ती सुतमुत्तमम् ॥ ३३ ॥

तमृषिं साऽभ्युपागम्य कालिन्दी चाभ्यवादयत् ।
स तामभ्यवदद्विप्रः पुत्रेप्सुं पुत्रजन्मनि ॥ ३४ ॥

तव कुक्षौ महाभागे सुपुत्रः सुमहाबलः ।
महावीर्यो महातेजा अचिरात् सञ्जनिष्यति ॥
गरेण सहितः श्रीमान् मा शुचः कमलेक्षणे ॥ ३५ ॥

एवमुक्ता महाभागा असिते स्वर्गते सति ।
निधाय चेतो नृपतौ विद्युल्लेखेव सुप्रभा ॥ ३६ ॥

च्यवनं तु नमस्कृत्य राजपुत्री पतिव्रता ।
पतिशोकातुरा तस्मात् पुत्रं देवी व्यजायत ॥ ३७ ॥

सपत्न्या तु गरस्तस्यै दत्तो गर्भजिघांसया ।
सह तेन गरेणैव जातः स सगरोऽभवत् ॥ ३८ ॥

सगरस्यासमञ्जस्तु असमञ्जात् तथांशुमान् ।
दिलीपोंऽशुमतः पुत्रो दिलीपस्य भगीरथः ॥
भगीरथात् ककुत्स्थस्तु रघुस्तस्मादजायत ॥ ३९ ॥

रघोस्तु पुत्रस्तेजस्वी प्रवृद्धः पुरुषादकः ।
कल्माषपादोऽप्यभवत्तस्माज्जातस्तु शङ्खणः ॥ ४० ॥

सुदर्शनः शङ्खणस्य अग्निवर्णः सुदर्शनात् ।
शीघ्रगस्त्वग्निवर्णस्य शीघ्रगस्य मरुः सुतः ॥
मरोः प्रशुश्रुकस्त्वासीदम्बरीषः प्रशुश्रुकात् ॥ ४१ ॥

अम्बरीषस्य पुत्रोऽभून्नहुषः पृथिवीपतिः ।
नहुषस्य ययातिस्तु नाभागस्तु ययातिजः ॥ ४२ ॥

नाभागस्य बभूवाजो अजाद्दशरथोऽभवत् ।
अस्माद्दशरथाज्जातौ भ्रातरौ रामलक्ष्मणौ ॥ ४३ ॥

आदिवंशविशुद्धानां राज्ञां परमधर्मिणाम् ।
इक्ष्वाकुकुलजातानां वीराणां सत्यवादिनाम् ॥ ४४ ॥

रामलक्ष्मणयोरर्थे त्वत्सुते वरये नृप ।
सदृशाभ्यां नरश्रेष्ठ सदृशे दातुमर्हसि ॥ ४५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे सप्ततितमः सर्गः ॥

आदितः श्लोकाः 2137

## एकसप्ततितमः सर्गः ॥ ७१ ॥

### कन्याप्रदानप्रतिज्ञा ॥

एवं ब्रुवाणं जनकः प्रत्युवाच कृताञ्जलिः ।
श्रोतुमर्हसि भद्रं ते कुलं नः परिकीर्तितम् ॥ १ ॥

प्रदाने हि मुनिश्रेष्ठ कुलं निरवशेषतः ।
वक्तव्यं कुलजातेन तन्निबोध महामुने ॥ २ ॥

राजाऽभूत्त्रिषु लोकेषु विश्रुतः स्वेन कर्मणा ।
निमिः परमधर्मात्मा सर्वसत्त्ववतां वरः ॥ ३ ॥

तस्य पुत्रो मिथिर्नाम मिथिला येन निर्मिता ।
प्रथमो जनको नाम जनकादप्युदावसुः ॥ ४ ॥

उदावसोस्तु धर्मात्मा राजा वै नन्दिवर्धनः ।
नन्दिवर्धनपुत्रस्तु सुकेतुर्नाम नामतः ॥ ५ ॥

सुकेतोरपि धर्मात्मा देवरातो महाबलः ।
देवरातस्य राजर्षेर्बृहद्रथ इति स्मृतः ॥ ६ ॥

बृहद्रथस्य शूरोऽभून्महावीरः प्रतापवान् ।
महावीरस्य धृतिमान्सुधृतिः सत्यविक्रमः ॥ ७ ॥

सुधृतेरपि धर्मात्मा दृष्टकेतुः सुधार्मिकः ।
दृष्टकेतोस्तु राजर्षेर्हर्यश्व इति विश्रुतः ॥ ८ ॥

हर्यश्वस्य मरुः पुत्रो मरोः पुत्रः प्रतिन्धकः ।
प्रतिन्धकस्य धर्मात्मा राजा कीर्तिरथः सुतः ॥ ९ ॥

पुत्रः कीर्तिरथस्याथ देवमीढ इति स्मृतः ।
देवमीढस्य विबुधो विबुधस्य महीध्रकः ॥ १० ॥

महीध्रकसुतो राजा कीर्तिरातो महाबलः ।
कीर्तिरातस्य राजर्षेर्महारोमा व्यजायत ॥ ११ ॥

महारोम्णस्तु धर्मात्मा स्वर्णरोमा व्यजायत ।
स्वर्णरोम्णस्तु राजर्षेर्ह्रस्वरोमा व्यजायत ॥ १२ ॥

तस्य पुत्रद्वयं राज्ञो धर्मज्ञस्य महात्मनः ।
ज्येष्ठोऽहमनुजो भ्राता मम वीरः कुशध्वजः ॥ १३ ॥

मां तु ज्येष्ठं पिता राज्ये सोऽभिषिच्य नराधिपः ।
कुशध्वजं समावेश्य भारं मयि वनं गतः ॥ १४ ॥

वृद्धे पितरि स्वर्याते धर्मेण धुरमावहम् ।
भ्रातरं देवसङ्काशं स्नेहात्पश्यन्कुशध्वजम् ॥ १५ ॥

कस्यचित्त्वथ कालस्य सांकाश्यादागतःपुरात् ।
सुधन्वा वीर्यवान्राजा मिथिलामवरोधकः ॥ १६ ॥

स च मे प्रेषयामास शैवं धनुरनुत्तमम् ।
सीता कन्या च पद्माक्षी मह्यं वै दीयतामिति ॥ १७ ॥

तस्याऽप्रदानाद्ब्रह्मर्षे युद्धमासीन्मया सह ।
स हतोऽभिमुखो राजा सुधन्वा तु मया रणे ॥ १८ ॥

निहत्य तं मुनिश्रेष्ठ सुधन्वानं नराधिपम् ।
साङ्काश्ये भ्रातरं वीरमभ्यषिञ्चं कुशध्वजम् ॥ १९ ॥

कनीयानेष मे भ्राता अहं ज्येष्ठो महामुने ।
ददामि परमप्रीतो वध्वौ ते मुनिपुङ्गव ॥ २० ॥

सीतां रामाय भद्रं ते ऊर्मिलां लक्ष्मणाय च ॥ २१ ॥

वीर्यशुल्कां मम सुतां सीतां सुरसुतोपमाम् ।
द्वितीयामूर्मिलां चैव त्रिर्ददामि न संशयः ॥ २२ ॥

रामलक्ष्मणयो राजन् गोदानं कारयस्व ह ।
पितृकार्यं च भद्रं ते ततो वैवाहिकं कुरु ॥ २३ ॥

मघा ह्यद्य महाबाहो तृतीये दिवसे विभो ।
फल्गुन्यामुत्तरे राजंस्तस्मिन्वैवाहिकं कुरु ॥
रामलक्ष्मणयोरर्थे दानं कार्यं सुखोदयम् ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे एकसप्ततितमः सर्गः ॥
आदितः श्लोकाः 2161.

## द्विसप्ततितमः सर्गः ॥ ७२ ॥

### गोदानमङ्गलकरणम् ॥

तमुक्तवन्तं वैदेहं विश्वामित्रो महामुनिः ।
उवाच वचनं वीरं वसिष्ठसहितो नृपम् ॥ १ ॥

अचिन्त्यान्यप्रमेयानि कुलानि कुलनन्दन ।
इक्ष्वाकूणां विदेहानां नैषां तुल्योऽस्ति कश्चन ॥ २ ॥

सदृशो धर्मसंबन्धः सदृशो रूपसंपदा ।
रामलक्ष्मणयो राजन्सीता चोर्मिलया सह ॥ ३ ॥

वक्तव्यं च नरश्रेष्ठ श्रूयतां वचनं मम ॥ ४ ॥

भ्राता यवीयान्धर्मज्ञ एष राजा कुशध्वजः ।
अस्य धर्मात्मनो राजन्रूपेणाप्रतिमं भुवि ॥
सुताद्वयं नरश्रेष्ठ पत्न्यर्थं वरयामहे ॥ ५ ॥

भरतस्य कुमारस्य शत्रुघ्नस्य च धीमतः ।
वरयेम सुते राजंस्तयोरर्थे महात्मनोः ॥ ६ ॥

पुत्रा दशरथस्येमे रूपयौवनशालिनः ।
लोकपालोपमाः सर्वे देवतुल्यपराक्रमाः ॥ ७ ॥

उभयोरपि राजेन्द्र संबन्धेनानुबध्यताम् ।
इक्ष्वाकुकुलमव्यग्रं भवतः पुण्यकर्मणः ॥ ८ ॥

विश्वामित्रवचः श्रुत्वा वसिष्ठस्य मते तदा ।
जनकः प्राञ्जलिर्वाक्यमुवाच मुनिपुङ्गवौ ॥ ९ ॥

कुलं धन्यमिदं मन्ये येषां नो मुनिपुङ्गवौ ।
सदृशं कुलसंबन्धं यदाज्ञापयथः स्वयम् ॥ १० ॥

एवं भवतु भद्रं वः कुशध्वजसुते इमे ।
पत्न्यौ भजेतां सहितौ शत्रुघ्नभरतावुभौ ॥ ११ ॥

एकाह्ना राजपुत्रीणां चतसृणां महामुने ।
पाणीन् गृह्णन्तु चत्वारो राजपुत्रा महाबलाः ॥ १२ ॥

उत्तरे दिवसे ब्रह्मन्फल्गुनीभ्यां मनीषिणः ।
वैवाहिकं प्रशंसन्ति भगो यत्र प्रजापतिः ॥ १३ ॥

एवमुक्त्वा वचः सौम्यं प्रत्युत्थाय कृताञ्जलिः ।
उभौ मुनिवरौ राजा जनको वाक्यमब्रवीत् ॥
परो धर्मः कृतो मह्यं शिष्योऽस्मि भवतोः सदा ॥ १५ ॥

इमान्यासनमुख्यानि आसातां मुनिपुङ्गवौ ।
यथा दशरथस्येयं तथाऽयोध्यापुरी मम ॥
प्रभुत्वे नास्ति संदेहो यथार्हं कर्तुमर्हथ ॥ १६ ॥

तथा ब्रुवति वैदेहे जनके रघुनन्दनः ।
राजा दशरथो हृष्टः प्रत्युवाच महीपतिम् ॥ १७ ॥
युवामसङ्ख्येयगुणौ भ्रातरौ मिथिलेश्वरौ ।
ऋषयो राजसङ्घाश्च भवद्भ्यामभिपूजिताः ॥ १८ ॥
स्वस्ति प्राप्नुहि भद्रं ते गमिष्यामि स्वमालयम् ।
श्राद्धकर्माणि सर्वाणि विधास्यामीति चाब्रवीत् ॥ १९ ॥
तमापृष्ट्वा नरपतिं राजा दशरथस्तदा ।
मुनीन्द्रौ तौ पुरस्कृत्य जगामाशु महायशाः ॥ २० ॥
स गत्वा निलयं राजा श्राद्धं कृत्वा विधानतः ।
प्रभाते काल्यमुत्थाय चक्रे गोदानमुत्तमम् ॥ २१ ॥
गवां शतसहस्राणि ब्राह्मणेभ्यो नराधिपः ।
एकैकशो ददौ राजा पुत्रानुद्दिश्य धर्मतः ॥ २२ ॥
सुवर्णशृङ्गाः संपन्नाः सवत्साः कांस्यदोहनाः ।
गवां शतसहस्राणि चत्वारि पुरुषर्षभः ॥ २३ ॥
वित्तमन्यच्च सुबहु द्विजेभ्यो रघुनन्दनः ।
ददौ गोदानमुद्दिश्य पुत्राणां पुत्रवत्सलः ॥ २४ ॥
स सुतैः कृतगोदानैर्वृतस्तु नृपतिस्तदा ।
लोकपालैरिवाभाति वृतः सौम्यः प्रजापतिः ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे द्विसप्ततितमः सर्गः ॥

आदितः श्लोकाः 2186

## त्रिसप्ततितमः सर्गः ॥ ७३ ॥

### सीताविवाहः ॥

यस्मिंस्तु दिवसे राजा चक्रे गोदानमुत्तमम् ।
तस्मिंस्तु दिवसे शूरो युधाजित्समुपेयिवान् ॥ १ ॥

पुत्रः केकयराजस्य साक्षाद्भरतमातुलः ।
दृष्ट्वा पृष्ट्वा च कुशलं राजानमिदमब्रवीत् ॥ २ ॥

केकयाधिपती राजा स्नेहात्कुशलमब्रवीत् ।
येषां कुशलकामोऽसि तेषां संप्रत्यनामयम् ॥ ३ ॥

स्वस्रीयं मम राजेन्द्र द्रष्टुकामो महीपतिः ।
तदर्थमुपयातोऽहमयोध्यां रघुनन्दन ॥ ४ ॥

श्रुत्वात्वहमयोध्यायां विवाहार्थं तवात्मजान् ।
मिथिलामुपयातांस्तु त्वया सह महीपते ॥ ५ ॥

त्वरयाऽभ्युपयातोऽहं द्रष्टुकामः स्वसुः सुतम् ।
तस्य त्वं राजशार्दूल प्रीतिं कर्तुमिहार्हसि ॥ ६ ॥

तस्य तद्वचनं श्रुत्वा मधुरं मधुराक्षरम् ।
अथ राजा दशरथः प्रियातिथिमुपस्थितम् ॥
दृष्ट्वा परमसत्कारैः पूजनार्हमपूजयत् ॥ ७ ॥

ततस्तामुषितो रात्रिं सह पुत्रैर्महात्मभिः ।
प्रभाते पुनरुत्थाय कृत्वा कर्माणि तत्त्ववित् ॥
ऋषींस्तदा पुरस्कृत्य यज्ञवाटमुपागमत् ॥ ८ ॥

युक्ते मुहूर्ते विजये सर्वाभरणभूषितः ।
भ्रातृभिः सहितो रामः कृतकौतुकमङ्गलः ॥ ९ ॥

वसिष्ठं पुरतः कृत्वा महर्षीनपरानपि ।
पितुः समीपमाश्रित्य तस्थौ भ्रातृभिरावृतः ॥ १० ॥

वसिष्ठो भगवानेत्य वैदेहमिदमब्रवीत् ॥ ११ ॥

राजा दशरथो राजन्कृतकौतुकमङ्गलैः ।
पुत्रैर्नरवरश्रेष्ठ दातारमभिकाङ्क्षते ॥ १२ ॥

दातृप्रतिग्रहीतृभ्यां सर्वार्थाः प्रभवन्ति हि ।
स्वधर्मं प्रतिपद्यस्व कृत्वा वैवाह्यमुत्तमम् ॥ १३ ॥

इत्युक्तः परमोदारो वसिष्ठेन महात्मना ।
प्रत्युवाच महातेजा वाक्यं परमधर्मवित् ॥ १४ ॥

कः स्थितः प्रतिहारो मे कस्याज्ञा संप्रतीक्ष्यते ।
स्वगृहे को विचारोऽस्ति यथा राज्यमिदं तव ॥ १५ ॥

कृतकौतुकसर्वस्वा वेदिमूलमुपागताः ।
मम कन्या मुनिश्रेष्ठ दीप्ता वह्नेरिवार्चिषः ॥ १६ ॥

सज्जोऽहं त्वत्प्रतीक्षोऽस्मि वेद्यामस्यां प्रतिष्ठितः ।
अविघ्नं क्रियतां राजन् किमर्थमवलम्बसे ॥ १७ ॥

तद्वाक्यं जनकेनोक्तं श्रुत्वा दशरथस्तदा ।
प्रवेशयामास सुतान्सर्वानृषिगणानपि ॥ १८ ॥

ततो राजा विदेहानां वसिष्ठमिदमब्रवीत् ।
कारयस्व ऋषे सम्यगृषिभिः सह धार्मिकैः ॥
रामस्य लोकरामस्य क्रियां वैवाहिकीं प्रभो ॥ १९ ॥

त्वया न विदितं किञ्चिन्नास्ति ब्रह्मविदां वर ।
तस्मात्त्वमेव ब्रह्मर्षे अशेषं कर्तुमर्हसि ॥ २० ॥

तथेत्युक्त्वा तु जनकं वसिष्ठो भगवानृषिः ।
विश्वामित्रं पुरस्कृत्य शतानन्दं च धार्मिकम् ॥ २१ ॥

प्रपामध्ये तु विधिवद्वेदिं कृत्वा महातपाः ।
अलञ्चकार तां वेदिं गन्धपुष्पैः समन्ततः ॥ २२ ॥

सुवर्णपालिकाभिश्च छिद्रकुम्भैश्च साङ्कुरैः ।
अङ्कुराढ्यैः शरावैश्च धूपपात्रैः सधूपकैः ॥ २३ ॥

शङ्खपात्रैः स्रुवैः स्रुग्भिः पात्रैरर्घ्याभिपूरितैः ।
लाजपूर्णैश्च पात्रीभिरक्षतैरभिसंस्कृतैः ॥ २४ ॥

दर्भैः समैः समास्तीर्य विधिवन्मन्त्रपूर्वकम् ।
अग्निमाधाय वेद्यां तु विधिमन्त्रपुरस्कृतम् ॥
जुहावाग्नौ महातेजा वसिष्ठो भगवानृषिः ॥ २५ ॥

ततः सीतां समानीय सर्वाभरणभूषिताम् ।
श्रियं पद्मवियुक्तां वै केशवाङ्कच्युतामिव ॥ २६ ॥

विद्युत्प्रभां विशालाक्षीं नीलकुञ्चितमूर्धजाम् ॥ २७ ॥

हंसाङ्कितेन क्षौमेण किंचित्पीतेन संवृताम् ।
वासितेनोत्तरीयेण सुरक्तेन सुसंवृताम् ॥ २८ ॥

समक्षमग्नेः संस्थाप्य राघवाभिमुखे तदा ।
अब्रवीज्जनको राजा कौसल्यानन्दवर्धनम् ॥ २९ ॥

इयं सीता मम सुता सहधर्मचरी तव ।
प्रतीच्छ चैनां भद्रं ते पाणिं गृह्णीष्व पाणिना ॥ ३० ॥

पतिव्रता महाभागा छायेवानुगता तव ।
इत्युक्त्वा प्राक्षिपद्राजा मन्त्रपूतं जलं तदा ॥ ३१ ॥

प्रक्षिप्ते सलिले भूमौ गगने चोत्थिताः स्वनाः ।
साधु साध्विति देवानामृषीणां वदतां तदा ॥ ३२ ॥

देवदुन्दुभिनिर्घोषः पुष्पवृष्टिर्महत्यभूत् ॥ ३३ ॥

एवं दत्वा तदा सीतां मन्त्रोदकपुरस्कृताम् ।
अब्रवीज्जनको राजा हर्षेणाभिपरिप्लुतः ॥ ३४ ॥

लक्ष्मणागच्छ भद्रं ते ऊर्मिलामुद्यतां मया ।
प्रतीच्छ पाणिं गृह्णीष्व मा भूत्कालस्य पर्ययः ॥ ३५ ॥

तमेवमुक्त्वा जनको भरतं चाभ्यभाषत ।
गृहाण पाणिं माण्डव्याः पाणिना रघुनन्दन ॥ ३६ ॥

शत्रुघ्नं चापि धर्मात्मा अब्रवीज्जनकेश्वरः ।
श्रुतकीर्त्या महाबाहो पाणिं गृह्णीष्व पाणिना ॥ ३७ ॥

सर्वे भवन्तः सौम्याश्च सर्वे सुचरितव्रताः ।
पत्नीभिः सन्तु काकुत्स्था मा भूत्कालस्य पर्ययः ॥ ३८ ॥

जनकस्य वचः श्रुत्वा पाणीन्पाणिभिरस्पृशन् ।
चत्वारस्ते चतसृणां वसिष्ठस्य मते स्थिताः ॥ ३९ ॥

अग्निं प्रदक्षिणीकृत्य वेदिं राजानमेव च ।
ऋषींश्चैव महात्मानः सभार्या रघुसत्तमाः ॥
यथोक्तेन तदा चक्रुर्विवाहं विधिपूर्वकम् ॥ ४० ॥

काकुत्स्थैश्च गृहीतेषु ललितेषु च पाणिषु ।
पुष्पवृष्टिर्महत्यासीदन्तरिक्षात्सुभास्वरा ॥
दिव्यदुन्दुभिनिर्घोषैर्गीतवादित्रनिःस्वनैः ॥ ४१ ॥

ननृतुश्चाप्सरःसङ्घा गन्धर्वाश्च जगुः कलम् ।
विवाहे रघुमुख्यानां तदद्भुतमिवाभवत् ॥ ४२ ॥

ईदृशे वर्तमाने तु तूर्योद्घुष्टनिनादिते ।
त्रिरग्निं ते परिक्रम्य ऊहुर्भार्या महौजसः ॥ ४३ ॥

अथोपकार्यां जग्मुस्ते सदारा रघुनन्दनाः ।
स्वानि यानानि चारोप्य तां पुरीं प्रययुस्तदा ॥ ४४ ॥

प्रीयमाणो दशरथः पुत्रान् पुत्रवतां वरः ।
राजाप्यनुययौ पश्यन्सर्षिसङ्घः सबान्धवः ॥ ४५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे त्रिसप्ततितमः सर्गः ॥

आदितः श्लोकाः 2231

## चतुःसप्ततितमः सर्गः ॥ ७४ ॥

### परशुरामसमागमः ॥

अथ रात्र्यां व्यतीतायां विश्वामित्रो महामुनिः ।
आपृष्ट्वा तौ च राजानौ जगामोत्तरपर्वतम् ॥
आशीर्भिः पूरयित्वा च कुमारांश्च सराघवान् ॥ १ ॥

विश्वामित्रे गते तस्मिन् राजा च जगतीपतिः ।
अयोध्याधिपतिः श्रीमान् वैदेहं मिथिलाधिपम् ॥
आपृष्ट्वाऽथ जगामाशु राजा दशरथः पुरीम् ॥ २ ॥

गच्छन्तं तं तु राजानमन्वगच्छन्नराधिपः । ॥ ३ ॥

अथ राजा विदेहानां ददौ कन्याधनं बहु ॥ ४ ॥

गवां शतसहस्राणि बहूनि मिथिलाधिपः ।
कम्बलानां च मुख्यानां क्षौमकोट्यम्बराणि च ॥ ५ ॥

हस्त्यश्वरथपादातं दिव्यरूपं स्वलङ्कृतम् ।
ददौ कन्यापिता तासां दासीदासमनुत्तमम् ॥ ६ ॥

हिरण्यस्य सुवर्णस्य मुक्तानां विद्रुमस्य च ।
ददौ परमसंहृष्टः कन्याधनमनुत्तमम् ॥ ७ ॥

दत्वा बहुधनं राजा समनुज्ञाप्य पार्थिवम् ।
संपूज्य मङ्गलाशीर्भिः कुमारान् रघुनन्दनान्
प्रविवेश स्वनिलयं मिथिलां मिथिलेश्वरः ॥ ८ ॥

तस्मिन् प्रविष्टे नगरं जनके जगतीपतिः ।
राजाऽप्ययोध्याधिपतिः सह पुत्रैर्महात्मभिः ॥
ऋषीन्सर्वान्पुरस्कृत्य जगाम सबलानुगः ॥ ९ ॥

वाहिनीं महतीं कर्षन् कीर्तिमांश्च ययौ तदा ॥ १० ॥

गच्छन्तं तं नरव्याघ्रं सर्षिसङ्घं सराघवम् ।
घोराः स्म पक्षिणो वाचो व्याहरन्ति ततस्ततः ॥ ११ ॥

भौमाश्चैव मृगाः सर्वे गच्छन्ति स्म प्रदक्षिणम् ॥ १२ ॥

तान्दृष्ट्वा राजशार्दूलो वसिष्ठं पर्यपृच्छत ॥ १३ ॥

असौम्याः पक्षिणो घोरा मृगाश्चापि प्रदक्षिणाः ।
किमिदं हृदयोत्कम्पि मनो मम च सीदति ॥ १४ ॥

राज्ञो दशरथस्यैतच्छ्रुत्वा वाक्यं महानृषिः ।
उवाच मधुरां वाणीं श्रूयतामस्य यत्फलम् ॥ १५ ॥

उपस्थितं भयं घोरं दिव्यं पक्षिमुखाच्च्युतम् ।
मृगाः प्रशमयन्त्येते सन्तापस्त्यज्यतामयम् ॥ १६ ॥

तेषां संवदतां तत्र वायुः प्रादुर्बभूव ह ।
कम्पयन्मेदिनीं सर्वां सपर्वतवनां महान् ॥ १७ ॥

तमसा संवृतः सूर्यः सर्वा न प्रबभुर्दिशः ।
भस्मना चावृतं सर्वं संमूढमिव तद्बलम् ॥ १८ ॥

वसिष्ठश्चर्षयश्चान्ये राजा च ससुतस्तदा ।
ससंज्ञा इव तत्रासन्सर्वमन्यद्विचेतनम् ॥ १९ ॥

तस्मिंस्तमसि घोरे तु भस्मच्छन्नेव सा चमूः ।
ददर्श भीमसङ्काशं जटामण्डलधारिणम् ॥ २० ॥

भार्गवं जामदग्न्यं तं राजवंशविमर्दनम् ।
कैलासमिव दुर्धर्षं कालाग्निमिव दुःसहम् ॥ २१ ॥

ज्वलन्तमिव तेजोभिर्दुर्निरीक्षं पृथग्जनैः ।
स्कन्धे चासज्य परशुं धनुर्विद्युद्गणोपमम् ॥
प्रगृह्य शरमुख्यं च त्रिपुरघ्नं यथा शिवम् ॥ २२ ॥

तं दृष्ट्वा भीमसंकाशं ज्वलन्तमिव पावकम् ।
वसिष्ठप्रमुखाः सर्वे जपहोमपरायणाः ॥ २३ ॥

सङ्गता मुनयः सर्वे संजजल्पुरथो मिथः ।
कच्चित्पितृवधामर्षी क्षत्रं नोत्सादयिष्यति ॥ २४ ॥

पूर्वं क्षत्रवधं कृत्वा गतमन्युर्गतज्वरः ।
क्षत्रस्योत्सादनं भूयो न खल्वस्य चिकीर्षितम् ॥ २५ ॥

एवमुक्त्वाऽर्घ्यमादाय भार्गवं भीमदर्शनम् ।
ऋषयो राम रामेति मधुरं वाक्यमब्रुवन् ॥ २६ ॥

प्रतिगृह्य तु तां पूजामृषिदत्तां प्रतापवान्
रामं दाशरथिं रामो जामदग्न्योऽभ्यभाषत ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे चतुस्सप्ततितमः सर्गः ॥

आदितः श्लोकाः 2258

## पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

### वैष्णवधनुरारोपणचोदना ॥

राम दाशरथे वीर वीर्यं ते श्रूयतेऽद्भुतम् ।
धनुषो भेदनं चैव निखिलेन मया श्रुतम् ॥ १ ॥

तदद्भुतमचिन्त्यं च भेदनं धनुषस्त्वया ।
तच्छ्रुत्वाऽहमनुप्राप्तो धनुर्गृह्यापरं शुभम् ॥ २ ॥

तदिदं घोरसङ्काशं जामदग्न्यं महद्धनुः ।
पूरयस्व शरेणैव स्वबलं दर्शयस्व च ॥ ३ ॥

तदहं ते बलं दृष्ट्वा धनुषोऽस्य प्रपूरणे ।
द्वन्द्वयुद्धं प्रदास्यामि वीर श्लाघ्यमिदं तव ॥ ४ ॥

भीतो यदि धनुस्त्यक्त्वा निर्जितोऽस्मीति वा वद ।
अथवा द्वन्द्वयुद्धं मे दाता त्वं वै न संशयः ॥ ५ ॥

तस्य तद्वचनं श्रुत्वा राजा दशरथस्तदा ।
विषण्णवदनो दीनः प्राञ्जलिर्वाक्यमब्रवीत् ॥ ६ ॥

क्षत्ररोषात्प्रशान्तस्त्वं ब्राह्मणानां च सन्निधौ ।
बालानां मम पुत्राणामभयं दातुमर्हसि ॥ ७ ॥

भार्गवाणां कुले जातः स्वाध्यायव्रतशालिनाम् ।
सहस्राक्षे प्रतिज्ञाय शस्त्रं निक्षिप्तवानसि ॥ ८ ॥

स त्वं धर्मपरो भूत्वा कश्यपाय वसुन्धराम् ।
दत्त्वा वनमुपागम्य महेन्द्रकृतकेतनः ॥ ९ ॥

मम सर्वविनाशाय संप्राप्तस्त्वं महामुने ।
न चैकस्मिन्हते रामे सर्वे जीवामहे वयम् ॥ १० ॥

ब्रुवत्येवं दशरथे जामदग्न्यः प्रतापवान् ।
अनादृत्यैव तद्वाक्यं राममेवाभ्यभाषत ॥ ११ ॥

इमे द्वे धनुषी श्रेष्ठे दिव्ये लोकाभिविश्रुते ।
दृढे बलवती मुख्ये सुकृते विश्वकर्मणा ॥ १२ ॥

अतिसृष्टं सुरैरेकं त्र्यम्बकाय युयुत्सवे ॥ १३ ॥

त्रिपुरघ्नं धनुःश्रेष्ठं भग्नं काकुत्स्थ यत्त्वया ।
इदं द्वितीयं दुर्धर्षं विष्णोर्दत्तं सुरोत्तमैः ॥ १४ ॥

तदिदं वैष्णवं राम धनुः परपुरञ्जयम् ।
समानसारं काकुत्स्थ रौद्रेण धनुषा त्विदम् ॥ १५ ॥

तदा तु देवताः सर्वाः पृच्छन्ति स्म पितामहम् ।
शितिकण्ठस्य विष्णोश्च बलाबलनिरीक्षया ॥ १६ ॥

अभिप्रायं तु विज्ञाय देवतानां पितामहः ।
विरोधं जनयामास तयोः सत्यवतां वरः ॥ १७ ॥

विरोधे च महद्युद्धमभवद्रोमहर्षणम् ।
शितिकण्ठस्य विष्णोश्च परस्परजिगीषिणोः ॥ १८ ॥

तदा तु जृम्भितं शैवं धनुर्भीमपराक्रमम् ।
हुङ्कारेण महादेवः स्तम्भितोऽथ त्रिलोचनः ॥ १९ ॥

देवैस्तदा समागम्य सर्षिसङ्घैः सचारणैः ।
याचितौ प्रशमं तत्र जग्मतुस्तौ सुरोत्तमौ ॥ २० ॥

जृम्भितं तद्धनुर्दृष्ट्वा शैवं विष्णुपराक्रमैः ।
अधिकं मेनिरे विष्णुं देवाः सर्षिगणास्तदा ॥ २१ ॥

पूजयित्वा ततो विष्णुमामन्त्र्य च पिनाकिनम् ।
ब्रह्मेन्द्रादीन्पुरस्कृत्य नाकपृष्ठं ययुस्तदा ॥ २२ ॥

धनू रुद्रस्तु संक्रुद्धो विदेहेषु महायशाः ।
देवरातस्य राजर्षेर्ददौ हस्ते ससायकम् ॥ २३ ॥

इदं च वैष्णवं राम धनुः परपुरञ्जयम् ।
ऋचीके भार्गवे प्रादाद्विष्णुः संन्यासमुत्तमम् ॥ २४ ॥

ऋचीकस्तु महातेजाः पुत्रस्याप्रतिकर्मणः ।
पितुर्मम ददौ दिव्यं जमदग्नेर्महात्मनः ॥ २५ ॥

न्यस्तशस्त्रे पितरि मे तपोबलसमन्विते ।
अर्जुनो विदधे मृत्युं प्राकृतां बुद्धिमास्थितः ॥ २६ ॥

वधमप्रतिरूपं तु पितुः श्रुत्वा सुदारुणम् ।
अमर्षो मे महानासीत्सर्वलोकभयप्रदः ॥ २७ ॥

क्षत्रमुत्सादयन्रोषाज्जातं जातमनेकशः ॥ २८ ॥

पृथिवीं चाखिलां प्राप्य कश्यपाय महात्मने ।
यज्ञस्यान्ते तदा राम दक्षिणां पुण्यकर्मणे ॥ २९ ॥

दत्त्वा महेन्द्रनिलयस्तपोबलसमन्वितः ।
स्थितोऽस्मि तस्मिंस्तप्यन्वै सुसुखं सुरसेविते ॥ ३० ॥

श्रुत्वा तु धनुषो भेदं विस्मितानां नभस्तले ।
भाषतां देवसङ्घानां ततोऽहं द्रुतमागतः ॥ ३१ ॥

तदिदं वैष्णवं राम पितृपैतामहं महत् ।
क्षत्रधर्मं पुरस्कृत्य गृह्णीष्व धनुरुत्तमम् ॥ ३२ ॥

योजयस्व धनुःश्रेष्ठे शरं परपुरञ्जयम् ।
यदि शक्नोषि काकुत्स्थ द्वन्द्वं दास्यामि ते ततः ॥ ३३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे पञ्चसप्ततितमः सर्गः ॥

आदितः श्लोकाः 2291.

## षट्सप्ततितमः सर्गः ॥ ७६ ॥

### जामदग्न्यपराजयः ॥

तच्छ्रुत्वा जामदग्न्यस्य वाक्यं दाशरथिस्तदा ।
गौरवाद्यन्त्रितकथः पितू राममथाब्रवीत् ॥ १ ॥

श्रुतवानस्मि यत्कर्म कृतवानसि भार्गव ।
अनुरुध्यामहे ब्रह्मन्पितुरानृण्यमास्थितः ॥ २ ॥

वीर्यहीनमिवाशक्तं क्षत्रधर्मेण भार्गव ।
अवजानासि मां राम पश्य मेऽद्य पराक्रमम् ॥ ३ ॥

इत्युक्त्वा राघवः क्रुद्धो भार्गवस्य वरायुधम् ।
शरं च प्रतिजग्राह हस्ताल्लघुपराक्रमः ॥ ४ ॥

आरोप्य तद्धनू रामः शरं सज्यं चकार ह ।
जामदग्न्यं ततो रामं रामः क्रुद्धोऽब्रवीद्वचः ॥ ५ ॥

ब्राह्मणोऽसीति पूज्यो मे विश्वामित्रकृतेन च ।
विश्वामित्रः पूजनीयस्तदीयस्त्वं द्विजोत्तम ॥
तस्माच्छक्तो न ते राम मोक्तुं प्राणहरं शरम् ॥ ६ ॥

इमां वा त्वद्गतिं राम तपोबलसमार्जिताम् ।
लोकानप्रतिमान्वा ते हनिष्यामि यदिच्छसि ॥ ७ ॥

न ह्ययं वैष्णवो दिव्यः शरः परपुरञ्जयः ।
मोघः पतति वीर्येण बलदर्पविनाशनः ॥ ८ ॥

इति ब्रुवति काकुत्स्थे भार्गवं प्रति रोषिते ।
वरायुधधरं रामं द्रष्टुं सर्षिगणाः सुराः ॥
पितामहं पुरस्कृत्य समेतास्तत्र सङ्घशः ॥ ९ ॥

गन्धर्वाप्सरसश्चैव सिद्धचारणकिन्नराः ।
यक्षराक्षसनागाश्च तद्द्रष्टुं महदद्भुतम् ॥ १० ॥

जडीकृते तदा लोके रामे वरधनुर्धरे ।
निर्वीर्यो जामदग्न्योऽसौ रामो राममुदैक्षत ॥ ११ ॥

तेजोऽभिहतवीर्यत्वाज्जामदग्न्यो जडीकृतः ।
रामं कमलपत्राक्षं मन्दं मन्दमुवाच ह ॥ १२ ॥

त्राहि त्राहि महाबाहो शृणु राम वचो मम ।
राजसूये कृते पूर्वं यज्ञे दशरथात्मज ॥ १३ ॥

कश्यपाय मया दत्ता यदा पूर्वं वसुन्धरा ।
विषये मे न वस्तव्यमिति मां कश्यपोऽब्रवीत् ॥ १४ ॥

सोऽहं गुरुवचः कुर्वन् पृथिव्यां न वसे निशाम् ।
कृता प्रतिज्ञा काकुत्स्थ कृता भूः कश्यपस्य ह ॥ १५ ॥

तदिमां मद्गतिं वीर हन्तुं नार्हसि राघव ।
मनोजवं गमिष्यामि महेन्द्रं पर्वतोत्तमम् ॥ १६ ॥

लोकास्त्वप्रतिमा राम निर्जितास्तपसा मया ।
जहि ताञ्छरमुख्येन मा भूत्कालविपर्ययः ॥ १७ ॥

अक्षयं मधुहन्तारं जानामि त्वां सुरोत्तमम् ॥ १८ ॥

धनुषोऽस्य परामर्शात्स्वस्ति तेऽस्तु परन्तप ॥ १९ ॥

एते सुरगणाः सर्वे निरीक्षन्ते समागताः ।
त्वामप्रतिमकर्माणमप्रतिद्वन्द्वमाहवे ॥ २० ॥

न चेयं मम काकुत्स्थ व्रीडा भवितुमर्हति ।
त्वया त्रैलोक्यनाथेन यदहं विमुखीकृतः ॥ २१ ॥

शरमप्रतिमं राम मोक्तुमर्हसि सुव्रत ।
शरमोक्षे गमिष्यामि महेन्द्रं पर्वतोत्तमम् ॥ २२ ॥

तथा ब्रुवति रामे तु जामदग्न्ये प्रतापवान् ।
रामो दाशरथिः श्रीमांश्चिक्षेप शरमुत्तमम् ॥ २३ ॥

स हतान्दृश्य रामेण स्वांल्लोकांस्तपसार्जितान् ।
जामदग्न्यो जगामाशु महेन्द्रं पर्वतोत्तमम् ॥ २४ ॥

ततो वितिमिराः सर्वा दिशश्चोपदिशस्तथा ।
सुराः सर्षिगणा रामं प्रशशंसुरुदायुधम् ॥ २५ ॥

रामं दाशरथिं रामो जामदग्न्यः प्रशस्य च ।
ततः प्रदक्षिणं कृत्वा जगामात्मगतिं प्रभुः ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे षट्सप्ततितमः सर्गः ॥

आदितः श्लोकाः 2317

## सप्तसप्ततितमः सर्गः ॥ ७७ ॥

### अयोध्याप्रवेशः ॥

गते रामे प्रशान्तात्मा रामो दाशरथिर्धनुः ।
वरुणायाप्रमेयाय ददौ हस्ते महायशाः ॥ १ ॥

अभिवाद्य ततो रामो वसिष्ठप्रमुखानृषीन् ।
पितरं विह्वलं दृष्ट्वा प्रोवाच रघुनन्दनः ॥ २ ॥

प्रणयन् मनसो वृत्तिं पितुः स परमात्मवान् ॥ ३ ॥

जामदग्न्यो गतो रामः प्रयातु चतुरङ्गिणी ।
अयोध्याभिमुखी सेना त्वया नाथेन पालिता ॥ ४ ॥

संदिशस्व महाराज सेनां त्वच्छासने स्थिताम् ।
शासनं काङ्क्षते सेना चातकालिर्जलं यथा ॥ ५ ॥

रामस्य वचनं श्रुत्वा राजा दशरथः सुतम् ।
बाहुभ्यां संपरिष्वज्य मूर्ध्न्युपाघ्राय राघवम् ॥ ६ ॥

गतो राम इति श्रुत्वा हृष्टः प्रमुदितो नृपः ।
पुनर्जातं तदा मेने पुत्रमात्मानमेव च ॥ ७ ॥

चोदयामास तां सेनां जगामाशु ततः पुरीम् ॥ ८ ॥

पताकाध्वजिनीं रम्यां तूर्योद्घुष्टनिनादिताम् ।
सिक्तराजपथां रम्यां प्रकीर्णकुसुमोत्कराम् ॥ ९ ॥

राजप्रवेशसुमुखैः पौरैर्मङ्गलवादिभिः ।
संपूर्णां प्राविशद्राजा जनौघैः समलंकृताम् ॥ १० ॥

पौरैः प्रत्युद्गतो दूरं द्विजैश्च पुरवासिभिः ।
पुत्रैरनुगतः श्रीमान् श्रीमद्भिश्च महायशाः ॥ ११ ॥

प्रविवेश गृहं राजा हिमवत्सदृशं प्रियम् ।
ननन्द सजनो राजा गृहे कामैः सुपूजितः ॥ १२ ॥

कौसल्या च सुमित्रा च कैकेयी च सुमध्यमा ।
वधूप्रतिग्रहे युक्ता याश्चान्या राजयोषितः ॥ १३ ॥

रामं च लक्ष्मणं चैव शत्रुघ्नं भरतं तथा ।
अर्चयन् मङ्गलाशीर्भिर्मङ्गलैरभ्यपूजयन् ॥
उपाहारैश्च संहृष्टाः कुमारानभिपूज्य च ॥ १४ ॥

ततः सीतां महाभागामूर्मिलां च यशस्विनीम् ।
कुशध्वजसुते चोभे जगृहुर्नृपपत्नयः ॥ १५ ॥
मङ्गलालम्भनैश्चैव शोभिताः क्षौमवाससः ।
देवतायतनान्याशु यथार्हं प्रत्यपूजयन् ॥ १६ ॥
अभिवाद्याभिवाद्यांश्च सर्वा राजसुतास्तदा ।
स्वं स्वं गृहं समासाद्य कुबेरभवनोपमम् ॥ १७ ॥
गोभिर्धनैश्च धान्यैश्च तर्पयित्वा द्विजोत्तमान् ।
रेमिरे मुदिताः सर्वा भर्तृभिः सहिता रहः ॥ १८ ॥
कुमाराश्च महात्मानो वीर्येणाप्रतिमा भुवि ।
कृतदाराः कृतास्त्राश्च सधनाः ससुहृज्जनाः ॥ १९ ॥
शुश्रूषमाणाः पितरं वर्तयन्ति नरर्षभाः ।
काले काले तु नीतिज्ञास्तोषयन्तो गुरुं गुणैः ॥ २० ॥
कस्यचित्त्वथ कालस्य राजा दशरथः सुतम् ।
अभिवादयितुं प्राप्तं श्यामं कमललोचनम् ॥
अक्लिष्टकारिणं शूरं परसैन्यविमर्दनम् ॥ २१ ॥
विनयं देहयोगेन संप्राप्तमिव संस्थितम् ।
भरतं कैकयीपुत्रमब्रवीद्रघुसत्तमः ॥ २२ ॥
अयं केकयराजस्य पुत्रो वसति पुत्रक ।
त्वां नेतुमागतो वीर युधाजिन्मातुलस्तव ॥ २३ ॥
प्रार्थितस्तेन धर्मज्ञ मिथिलायामहं तदा ।
ऋषिमध्ये तु तस्य त्वं प्रीतिं कर्तुमिहार्हसि ॥ २४ ॥

श्रुत्वा दशरथस्यैतद्भरतः कैकयीसुतः ।
अभिवाद्य गुरुं रामं परिष्वज्य च लक्ष्मणम् ॥
गमनायाभिचक्राम शत्रुघ्नसहितस्तदा ॥ २५ ॥
आपृच्छ्य पितरं शूरो रामं चाक्लिष्टकारिणम् ।
मातृश्चापि नरश्रेष्ठः शत्रुघ्नसहितो ययौ ॥ २६ ॥
युधाजित्प्राप्य भरतं सशत्रुघ्नं प्रहर्षितः ।
स्वपुरं प्राविशद्वीरः पिता तस्य तुतोष ह ॥ २७ ॥
गते च भरते रामो लक्ष्मणश्च महारथः ।
पितरं देवसङ्काशं पूजयामासतुस्तदा ॥ २८ ॥
पितुराज्ञां पुरस्कृत्य पौरकार्याणि सर्वशः ।
चकार रामो धर्मात्मा प्रियाणि च हितानि च ॥ २९ ॥
मातृभ्यो मातृकार्याणि कृत्वा परमयन्त्रितः ।
गुरूणां गुरुकार्याणि काले कालेऽन्ववैक्षत ॥ ३० ॥
एवं दशरथः प्रीतो ब्राह्मणा नैगमास्तथा ।
रामस्य शीलवृत्तेन सर्वे विषयवासिनः ॥ ३१ ॥
तेषामतियशा लोके रामः सत्यपराक्रमः ।
स्वयंभूरिव भूतानां बभूव गुणवत्तरः ॥ ३२ ॥
रामस्तु सीतया सार्धं विजहार बहूनृतून् ।
मनस्वी तद्गतस्तस्या नित्यं हृदि समर्पितः ॥ ३३ ॥
प्रिया तु सीता रामस्य दाराः पितृकृता इति ।
गुणाद्रूपगुणाच्चापि प्रीतिर्भूयोऽभ्यवर्धत ॥ ३४ ॥

हृदयं चैव जानाति प्रीतियोगि परस्परम् ॥ ३५ ॥
तस्याश्च भर्ता द्विगुणं हृदये परिवर्तते ।
अन्तर्जातमपि व्यक्तमाख्याति हृदयं हृदा ॥ ३६ ॥
तस्य भूयो विशेषेण मैथिली जनकात्मजा ।
देवताभिः समा रूपे सीता श्रीरिव रूपिणी ॥ ३७ ॥

तया स राजर्षिसुतोऽभिरामया
समेयिवानुत्तमराजकन्यया ।
अतीव रामः शुशुभेऽतिकामया
विभुः श्रिया विष्णुरिवामरेश्वरः ॥ ३८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
बालकाण्डे सप्तसप्ततितमः सर्गः ॥
आदितः श्लोकाः 2355.

श्रीगोमतीतीरे नैमिशारण्ये अश्वमेधयज्ञवाटगत मुनीन्द्रद्विजेन्द्रनरेन्द्रऋक्षगोपुच्छवानरेन्द्रराक्षसेन्द्रपरिवृतस्य मुनिवृन्दारकवृन्दवन्द्यमानकोरकाकारपादयुगळस्य अयोध्यापुराधीशस्य राजाधिराजस्य कृतज्ञस्य सकललोकशरण्यस्य सकलजगद्रक्षणजागरूकस्य लोकाभिरामस्य श्रीरामचन्द्रस्य निकटे गायतोः श्रीरामात्मजयोः कुशलवयोः आख्याने श्रीमद्रामायणे वर्तमानकथाप्रसङ्गः

अस्यानन्तरं अयोध्याकाण्डं भविष्यति। तस्यायमाद्यः श्लोकः

गच्छता मातुलकुलं भरतेन तदाऽनघः ।
शत्रुघ्नो नित्यशत्रुघ्नो नीतः प्रीतिपुरस्कृतः ॥